सत्येन ब्रह्मचर्येण व्यायामेनाथ विद्यया ।
देशभक्त्यात्मत्यागेन सम्मानार्हः सदा भव ॥

# संस्कृत-गद्यलहरी

भाग २



संस्कृत सीरीज आफिस, वाराणसी-१

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

॥ श्रीः ॥

हरिदास संस्कृत ग्रन्थमाला

२६०

॥ श्रीः ॥

# संस्कृत-गद्यलहरी

[ द्वितीयो भागः ]

हरिहर झा

एम० ए०, बी० एड्०, व्याकरणाचार्य, साहित्याचार्य,

अध्यापक, सेंट्रल हिन्दू स्कूल, काशी हिन्दू विश्वविद्यालय



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

प्राविधिक-जगत् के चरमोत्कर्ष, विश्वविद्यालय के कर्णधार,

सुजनता के शरीर, लोकप्रियता के प्रमाण,

अपने श्रद्धेय उपकुलपति

श्री एम्० सी० विजावत

को



हरिहर

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

# आमुख

बड़े उल्लास का विषय है कि स्वतन्त्र भारत के उदात्त लोक-नायकों का ध्यान संस्कृत के महत्त्व की ओर आकृष्ट हो रहा है। सचमुच संस्कृत का अध्ययन किए बिना भारतीय राष्ट्र की आत्मा का पूर्ण परिचय नहीं प्राप्त किया जा सकता है। यदि साहित्य, अपने सामान्य अर्थ में, मानव-जीवन की चेतना है, तो संस्कृत-साहित्य मानव-आत्मा की अमर चेतना है। वाल्मीकि और व्यास, भास और कालिदास, बाण और जयदेव, श्रीहर्ष और जगन्नाथ—इन सबकी समवेत साधना की चरम सिद्धि, अथ च वैदिक ऋषियों की मनीषा तथा चिन्तन-शक्ति का मधुर परिपाक है यह संस्कृत साहित्य।

प्रस्तुत कृति में उसी संस्कृत-साहित्य के रस-पेशल एवं शिक्षाप्रद प्रकरणों का समावेश है। स्वतन्त्र-भारत एवं विज्ञान-जगत् के आधुनिकतम विषय भी यथास्थल निबद्ध हैं।

इसमें मनोवैज्ञानिक, ऐतिहासिक, वैज्ञानिक, सांस्कृतिक, साहित्यिक, राजनीतिक, धार्मिक, भौगोलिक, व्यापारिक, राष्ट्रिय एवं अन्ताराष्ट्रिय आदि सभी प्रकार की ज्ञान देनेवाली रचनाएँ संगृहीत हैं।

शिक्षा-मनोविज्ञान की प्रश्नोत्तर-प्रणाली जटिलतम विषयों को भी हृदयंगत कराने के लिए ग्राह्य और उपादेय समझी जा रही है।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

इसी दृष्टिकोण को ध्यान में रखकर पाठों के उपरान्त पर्याप्त प्रश्नावली भी दे दी गई है।

प्रस्तुत पुस्तक का प्रधान उद्देश्य है—विद्यार्थियों में राष्ट्र-प्रेम, यत्नवाद, प्रगतिवाद, आशावाद तथा मानवतावाद की उदात्त प्रवृत्तियों का युग-चेतना के अनुरूप सञ्चार करना। यही कारण है कि रूढ़िवादी, दुरूह एवं युग के प्रतिकूल विषयों का बड़ी सतर्कता से परित्याग कर दिया गया है। मेरा दृढ़ विश्वास है कि इन पाठों के अनुशीलन-परिशीलन से छात्रों के हृदय में अपने प्रशस्त एवं स्वर्णिम अतीत के प्रति श्रद्धा के भाव जागरित होंगे।

'गद्यलहरी' की अमर भारती छात्रों के चरित्र-निर्माण के लिए मधुमय वरदान बने यही कामना है।

मैं काशी हिन्दू विश्वविद्यालय के अधिकारियों—डा० श्री सूर्यकान्त शास्त्री, श्रीयुत कालीकृष्ण वराट् तथा उन सभी गुरुजनों, मित्रों, लेखकों, एवं प्रकाशकों का हृदय से ऋणी हूँ, जिनके आशीर्वाद और सहयोग से यह कृति प्रकाश में आ सकी है।

—हरिहर

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

# विषय-सूची





CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

# भारत-गीतम्



गायन्ति देवाः किल गीतकानि
धन्यास्तु ये भारतभूमिभागे ।
स्वर्गापवर्गास्पदहेतुभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥ १ ॥

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

अहो अमीषां किमकारि शोभनं
प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे
मुकुन्दसेवौपयिकं स्पृहा हि नः ॥ २ ॥

अहो भुवः सप्तसमुद्रवत्या
द्वीपेषु वर्षेष्वधिपुण्यमेतत् ।
गायन्ति यत्रत्यजना मुरारेः
कर्माणि भद्राण्यवतारवन्ति ॥ ३ ॥

कल्पायुषां स्थानजयात् पुनर्भवात्
क्षणायुषां भारतभूजयो वरम् ।
क्षणेन मर्त्येन कृतं मनस्विनः
संन्यस्य संयान्त्यभयं पदं हरेः ॥ ४ ॥

जानीम नैतत् क्व वयं विलीने
स्वर्गप्रदे कर्मणि देहबन्धम् ।
प्राप्स्याम धन्याः खलु ते मनुष्या
ये भारते नेन्द्रियविप्रहीनाः ॥ ५ ॥

**प्रश्नाः**

१. देवाः किं गायन्ति ?
२. सप्तसमुद्राणां नामानि वर्णयत ?
३. भारतीयजनाः किं गायन्ति ?
४. मनस्विनः संन्यस्य क्व यान्ति ?
५. के मनुष्याः धन्याः ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

# आर्यावर्तः

अस्ति समस्तविश्वंभराभोगभास्वल्ललामलीलायमानः समानः सेव्यतया नाकलोकस्य, ग्राम्यकविकथाबन्ध इव नीरसस्य मनोहरः, भीम इव भारतालङ्कारभूतः, अनधीत-व्याकरण इव अदृष्टप्रकृतिनिपातोपसर्गलोपवर्णविकारः, पशुपतिजटाबन्ध इव विकसितकनककमलकुवलयोच्छालित-रजःपुञ्जपिञ्जरितहंसावतंसया प्रचुरचलच्चकोरचक्रवाक-कारण्डवमण्डलीमण्डिततीरया भगीरथभूपालकीर्तिपताकया स्वर्गगमनसोपानवीथीयमानरिङ्गत्तरङ्गया गङ्गया पुण्य-सलिलैः प्लावितश्चन्द्रभागालङ्कृतैकदेशश्च, सारः सकलसंसार-चक्रस्य, शरण्यः पुण्यकारिणाम् , आरामो रामणीयक-कदलीवनस्य, धाम धर्मस्य, आस्पदं सम्पदाम् , आश्रयः श्रेयसाम् , आकरः साधुव्यवहाररत्नानाम् , आचार्यभव-नम् आर्यमर्यादोपदेशानाम् आर्यावर्तो नाम देशः ।

मनुनाप्यभाणि यत्—

आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् ।<br>
तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥

यस्मिन्ननवरतधर्मकर्मोपदेशशान्तसमस्तव्याधिव्यति-कराः पुरुषायुषजीविन्यः सकलसंसारसुखभाजः प्रजाः। तथाहि

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

कुष्ठयोगो गान्धिकापणेषु, सन्निपातस्तालेषु, ग्रहसङ्क्रान्तिर्ज्योतिःशास्त्रेषु, क्षयस्तिथिषु, गुल्मवृद्धिर्वनभूमिषु, गलग्रहो मत्स्येषु, गण्डकोत्थानं पर्वतवनभूमिषु, शूलसम्बन्धश्चण्डिकायतनेषु दृश्यते न प्रजासु ।

यत्र चतुरगोपशोभिताः सङ्ग्रामा इव ग्रामाः, तुङ्गसकलभवनाः सर्वत्र नगा इव नगरप्रदेशाः, सदाचारणमण्डनानि नूपुराणीव पुराणि, सदानभोगाः प्रभञ्जना इव जनाः, पीवरोधसः सरित इव गावः, सतीव्रतापदोषाः सूर्यद्युतय इव कुलस्त्रियः ।

यत्र च मनोहारिसारसद्वन्द्वास्तत्पुरुषेण द्विगुना चाधिष्ठिताः कादम्बरीगद्यबन्धा इव दृश्यमानबहुव्रीहयः केदाराः । अपि च—

भवने फाल्गुने यत्र वृक्षशाखा विपल्लवाः ।
जायन्ते न तु लोकस्य कदापि च विपल्लवाः ॥

यत्र सौराज्यरञ्जितमनसः, सकलसमृद्धिवर्धितमहोत्सवपरम्परारम्भनिर्भराः सततमकुलीनं कुलीनाः, प्राप्तविमानमप्राप्तविमानभङ्गाः, कतिपयवसुविराजितमनेकवसवः समुपहसन्ति स्वर्गवासिनं जनं जनाः ।

कथं चासौ स्वर्गान्न विशिष्यते !

यत्र गृहे गृहे गौर्यः स्त्रियः, महेश्वरो लोकः, सश्रीका

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

हरयः, पदे पदे धनदाः सन्ति लोकपालाः केवलं न सुराधिपो राजा न विनायकः कश्चित् ।

यत्र च गुरुव्यतिक्रमं नक्षत्रराशयः, मात्राकलहं लेखशालिकाः, मित्रोदयद्वेषमुलूकाः, अपत्यत्यागं कोकिलाः, बन्धुजीवविघातं ग्रीष्मदिवसाः कुर्वन्ति न जनाः ।

किम्बहुना—

देशः पुण्यतमोद्देशः, कस्यासौ न प्रियो भवेत् ।
युक्तोऽनुक्रोशसम्पन्नैर्यो जनैरिव योजनैः ॥

**प्रश्नाः**

१. आर्यावर्तः कीदृशः देशः अस्ति ?
२. आर्यावर्तस्य मनु-प्रतिपादितस्वरूपं श्रावयत ।
३. आर्यावर्ते कुत्र कुत्र किं किं दृश्यते ?
४. अत्रत्याः पुरनगरग्रामादयः कीदृशाः सन्ति ?
५. अत्रत्याः जनाः कं समुपहसन्ति ?
६. कथमयं देशः स्वर्गाद्विशिष्यते ?
७. ग्रीष्मदिवसाः जनाः च किं किं वैपरीत्येन कुर्वन्ति ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

## वाराणसी-वभवम्

वाराणसी निविशते न वसुन्धरायां,
तत्र स्थितिर्मखभुजां भुवने निवासः ।
तत्तीर्थमुक्तवपुषामत एव मुक्तिः
स्वर्गात्परं पदमुदेतु मुदे तु कीदृक् ॥

सकलभुवनललामभूतेयं समस्तपुण्यपुरीसम्राज्ञी वाराणसी, न केवलं भूतले एव, अपि तु लोकत्रयेऽपि, पवित्रातिरेकसम्पादिकेतिप्रथितकीर्तिः, भगवतो नवचन्द्रमौलेस्त्रिशूलोपरि विराजमाना, मुक्तिप्रदायिनीति प्रथितयशोऽवदाना, सकलतीर्थानामेकमायतनम् , विद्याश्रियोर्मातृसदनम् , भवनं वैभवस्य, आस्पदं साधुतायाः, कुलभवनं तपस्यायाः, आकरो ज्ञानस्य, निधानं वैचित्र्यस्य कस्य वा न विदिता सचेतसः ।

अस्याः महिमानमुपवर्णयन्तो न विरमन्ति परमपूरुषनिःश्वसितात्मकाः अबाधिताः अक्षयाश्चत्वारो वेदाः पुराणानि सेतिहासानि च ।

इयमेव हि पुरा कृतयुगे राजर्षेर्दिवोदासस्य राजधानीत्वमासेदुषी सौभाग्यसम्पत्समृद्धिभिर्दिवौकसामपि स्पृहणीया बभूव । मुमुक्षुभ्यो मुक्तहस्तं पायसान्नं वितरन्ती

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

मूर्तिमती मांगल्यदेवता शैलाधिराजदुहिता श्रीविश्वनाथदयिता भगवत्यन्नपूर्णापि साकं स्वपरिवारेणात्रैव समागत्य मुक्तिसाम्राज्यसम्राज्ञीपदं समलञ्चकार। भगवान् विश्वनाथोऽपि विनश्वरतनूमूल्येन सर्वोपायदुरवापामपि मुक्तिमाकीटमापामरं समानभावेन विक्रीणानः कति कति वा न सुकृतिनो मुक्तिभाजो विदधे। भगवती जह्नुतनयापि पापिनः समुद्धर्त्तुकामा गङ्गाधरस्य कपर्दबन्धान्निष्क्रम्य विश्वेशितू राजधान्या अस्या वाराणस्याः पादमूलं क्षालयन्ती सुधासमधिकस्वादुना स्वपाथःप्रवाहेण तृषार्तानां परमां तृप्तिमातन्वती समुद्धरन्ती पातकिनः प्रौढेव विगतचापल्या शान्तात्मनात्र प्रवहति। सत्यमूर्तिर्महाराजहरिश्चन्द्रोऽपि गाधिनन्दनेन राज्यमपहृत्य निर्वासितः सन् चाण्डालराजे आत्मानं विक्रीय तदनुचरीभवन् अत्रैव केदारखण्डे भागीरथीतटे प्रभोरर्थे प्रेतवस्त्राणि सञ्चिन्वन्नराजत। अष्टादशपुराणानां निर्माता कृष्णद्वैपायनो व्यासोऽपि अत्रैव वासं कल्पितवान्। अत्रैव भगवतो विष्णोरंशभूतेन भगवता धन्वन्तरिणापि आयुर्वेदविद्यासम्प्रदायः प्रवर्तितः। अत्रैव भगवतो विष्णोस्तल्पसङ्कल्पसम्पादनसमर्पितवपुषो नागराजस्य शेषस्यावतारभूतो भगवान् पतञ्जलिराविर्भूय महाभाष्यं प्रणिनाय। 'कुट्टिनीमते' दामोदरगुप्तेन, बौद्धजातकेषु वर्णितायाः काश्याः निकट एव

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

सम्प्रति 'सारनाथ'नाम्ना प्रसिद्धं स्थानमस्ति। सनातनधर्मस्य मातृगृहभूताप्यसौ बौद्धजैनादिधर्माणामपि प्रसारलीलाभूमिर्बभूव। शंकरावतारो भगवान् शंकराचार्योऽपि अत्रैव तत्त्वज्ञानमवाप्तवान्। वल्लभाचार्य-चैतन्यदेव-प्रभृतयोऽपि अत्रैव निवसन्तः स्वस्वधर्ममुपदिदिशुः।

प्रायः सर्वेष्वेव शास्त्रेषु तत्तच्छास्त्रीयनिबन्धनिर्मातारः अपि इमां काशिकां समलंचक्रिरे। तत्र व्याकरणे पतञ्जलि-वामन–जयादित्य–रामचन्द्राचार्य–शेषकृष्ण-भट्टोजिदीक्षित-नागेशभट्ट-बालभट्ट-शम्भुदेव-जनार्दन-काशीनाथशास्त्रि-राजा-रामशास्त्रि–बालशास्त्रि–गंगाधरशास्त्रि–दामोदरशास्त्रि-शिव-कुमारशास्त्रि-तात्याशास्त्रिणोऽपि समभूवन्। वेदान्ते शंकराचार्य–पद्मपादाचार्य–मधुसूदनसरस्वती–नृसिंहस्वामि-काष्ठजिह्वस्वामिनः अत्रैवावसन्। न्यायेऽपि भवानन्द-महादेव-दिनकर-कृष्णभट्ट-विद्यानिवास–भट्टाचार्य-विश्वनाथपञ्चानन-महादेव-गङ्गाराम-कैलासचन्द्र-शिरोमणिभट्टाचार्याः काशीमेव चिरं निषेव्य अत्रैव वपुर्विससृजुः। धर्मशास्त्रेऽपि श्रीनारायणभट्ट–शंकरभट्ट-कमलाकरभट्ट–नीलकण्ठभट्ट–दिनकरभट्ट-नन्दपण्डित-शेषश्रीकृष्णादयः समभवन्। सांख्ये विज्ञानभिक्षवो-गणेशदीक्षिताः; मीमांसायां खण्डदेवाः, शंभुभट्टाः, भट्टवंश्याश्च; पुराणे नीलकण्ठचतुर्धराः; ज्यौतिषे कमलाकर-रङ्गनाथ-मुनीश्वर-नीलकण्ठ-बापूदेवशास्त्रि-सुधाकरद्विवेदि-

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

चन्द्रदेव-वेतालविनायकशास्त्रि-महादेवशास्त्रिणोऽन्ये च सम-भूवन् । तन्त्रे प्रेमनिधिभास्कररायादयः, अलंकारे पण्डितराजजगन्नाथादयः, महानैयायिकः मिथिलालंकारः शंकरमिश्रोऽपि चरमे वयसि काशीमेव सेवन्ते स्म। तुलसीदास-कबीर-तैलङ्गस्वामी-भास्करानन्द-विशुद्धानन्दा-दयः सिद्धपुरुषा अपि इहैव निवासं भेजिरे। अत्रत्यौ संस्कृतविश्वविद्यालय-हिन्दूविश्वविद्यालयौ प्रतिवर्षमसंख्यान् विदुषः लब्धप्रतिष्ठान् वितन्वन्तौ सरस्वतीमविरतं निषेवेते। अत्रैव काशीविद्यापीठमपि राष्ट्रियशिक्षाप्रचारैकलक्ष्यं सुलक्षणं संलक्ष्यते। महाविद्यालयानां विद्यालयानां संख्या शतचतुष्टयादप्युपरि गच्छन्ती विद्यासमृद्धिं द्योतयति। भारतमातुः मन्दिरम्, धर्मसंघविद्याभवनम् च अतीव रमणीयमुपयोगि च वर्तते। वर्तमानेऽपि गोपीनाथकवि-राज-आनन्दमयीमां-रामेश्वरझाप्रभृतयो योगिराजाः अत्रैव विराजन्ते।

काशिकायाः पादमूलं क्षालयन्त्याः भगवत्याः जाह्नव्याः अवतारतीर्थेषु पंक्तिशोऽवस्थिताः अनेकमहीपाल-सुयशःस्वरूपाः पाषाणनिर्मिताः शताधिकाः घट्टास्तु सकल-भूतलविलक्षणसुषमा अनन्यसामान्या एव। पञ्चगंगा-तीर्थनिकटे औरंगजेबनिर्मापितमस्जिदमध्यवर्ती समुन्नत-तमो दूरवीक्षणयूपसौधो ( माधोलाल का धरैरा ) बाहु-रिव काशिकायाः समाह्वयन्निव विश्वमानवान् संलक्ष्यते।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

एवंविधानामसंख्यानामाश्चर्यभूम्नां प्रसवभूमिरियं वाराणसी केन वा साकल्येन वर्णयितुं शक्यते । सर्वाङ्गीण-विशेषविभूषितायाः अस्याः प्रत्यङ्गमनेके विशेषाः सविशेषं लक्ष्यन्ते, तेषां सर्वेषां वर्णनं वाक्पथातीतमेव । नैषधीय-चरिते सरस्वत्याः मुखाब्जगलितं पद्यामृतं सादरं निपेयं सहृदयैः—

न श्रद्दधासि यदि चेन्मम मौनमस्तु
कथ्या निजाप्ततमयैव तवानुभूत्या ।
न स्यात्कनीयसितरा यदि नाम काश्या
राजन्वती मुदिरमण्डनधन्वना भूः ॥

प्रश्नाः

१. अत्रत्यानां कथं मुक्तिर्भवति ?
२. दिवोदासस्य राजधानी कुत्र आसीत् ?
३. अन्नपूर्णा कुत्र कीदृशं च पदमलंचकार ?
४. के के ऐतिहासिकाः पुण्यजन्मानः अत्र न्यवसन् ?
५. सारनाथः क्वास्ति ?
६. कस्य कस्य शास्त्रस्य के के आचार्याः अत्र अभूवन् ?
७. स्नातकोत्तरपाठिन्यः कति संस्थाः अत्र सन्ति ?
८. नैषधीयचरिते सरस्वत्या किमुक्तं वाराणसी-विषये ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

# अनुशासनम्

कस्यापि व्यवस्थितस्य नियमसमुदायस्य पालनम् 'अनुशासनम्' उच्यते। अथवा कस्यापि नियन्तृतया नियुक्तस्य वचसोऽनुवर्तनमनुशासनम्। एकमपि प्रश्नम-कृत्वा तदनुवृत्तिः साधीयसोऽनुशासनस्य स्वरूपमवधार्यम्। कापि व्यवस्थिता संस्था अनुशासनं विना न प्रचलितुं पारयति। तद्विना तस्याः गतिरतीव दुरन्ता जायते। यथा नावि नियताः कूपदण्डाः, चालनदारवः, प्रसार्यमाण-वस्त्रप्रसारसङ्कोचरज्जवो वा यदि नियमपूर्वकम् न चाल्येरन् मध्ये सरिन्नौर्विपद्यते, तथैव ते ते पुरुषा यदि दलप्रधानम-क्षरशो नानुवर्त्तेरन् कोऽपि समुदायः सफलप्रयासो न भवेत्। अस्माकं जीवनस्य सर्वास्वपि दशासु प्रकाममावश्यकम् अनुशासनं नाम। बाल्ये, यौवने, प्रौढत्वे, वार्द्धकेऽपि वाऽनुशासनमपेक्ष्यते एव। विद्यालये, गृहे, सार्वजनिक-संस्थासु विनाऽदः कार्यं न चलति। बालको जातमात्र एवानुशासनं शिक्षणीयः। एतेन तस्य भाविजीवनं तस्मै महत्त्वमुपहरिष्यति।

एकः बालः योऽनुशासनं न शिक्षितः निजमेव मनो-गतं हितं मन्यमानः यथार्थतः स्वहितं न लभते। स

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

यथेच्छमाचरन् अनर्थमुपैति । यो बालो नानुशासनं प्रापितो नासौ पित्रोराज्ञामनुवर्त्तते, न वा मान्यानाद्रियते, केवलमभिमन्यते स्वं च भाविजीवनं विफलं कुरुते ।

यस्मिन् गृहेऽनुशासनं नास्ति कदाचिदपि तत्र शान्तिर्न पदं दधाति । तस्मिन् हि गृहे सर्वेऽपि जनाः प्रधानस्याज्ञामनादृत्य यथेच्छं व्यवहरन्ति, तेन शान्तिः पलायते । शान्तावपसृतायां विवादाः, अविश्वासाः, अथाव्यवस्थाश्च पदमादधते ।

विद्यालयेऽपि महते फलाय कल्पतेऽनुशासनम् । विद्यार्थिनः सुव्यवस्थितस्यानुशासनस्य पात्रतां नेयाः, येन ते स्वगुरूनाद्रियेरन् , तेषामुपदेशांश्चाशेषमनुसरेयुः । यावत्तेषु अनुशासनसंयमो नागच्छति तावत् ते शिक्षिता न मन्यन्ताम् । ते सर्वं शास्त्रमभ्यस्य सकलासु परीक्षासु साफल्यमासाद्यापि मनुष्यपदं तावन्न लब्धुमीशते यावद्दृढेनानुशासनेन सन्दानिता न जायेरन् । छात्राणामनुशासनहीनताऽद्य सत्यमेव एका प्रमुखा समस्या वर्तते । सर्वे विचारशीला इदं दृष्ट्वा चिन्ताविह्वलाः संजाता यद्देशस्य भाविकर्णधारेषु इयं प्रवृत्तिः केन हेतुना उत्तरोत्तरं वर्धते । वस्तुतस्तु छात्राणां चरित्रनिर्माणस्य त्रीणि साधनानि सन्ति । तेषां गृहम् , शिक्षासंस्थानम् शिक्षाप्रणाली च ।

गृहम्—बहवः संरक्षकाः बालकान्प्रति जागरूकाः

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

सतर्काश्च न भवन्ति । प्रायो बहुलेषु गृहेषु तादृक् संस्कृतं पवित्रञ्च वातावरणं न वर्तते यादृग्बालानां चरित्रनिर्माणाय अपेक्षितम् । पदे पदेऽभिभावकानामसत्यभाषणस्य प्रवृत्तिः बालकानपि मिथ्याभाषणे नियोजयते । शिक्षासंस्थानेषु छात्राणां प्रवेशप्राप्त्यनन्तरं बहवः संरक्षकाः स्वकर्तव्यस्येतिश्रियं मत्वा तुष्यन्ति । इयं प्रवृत्तिर्भयावहा ।

शिक्षासंस्थानम्—शिक्षका अपि छात्राणामनुशासनहीनताया निमित्तम् । ये पाठ्यपुस्तकानि परिसमाप्य सन्तुष्टा जायन्ते । अन्तेवासिनां शारीरिक-मानसिकाध्यात्मिकशक्तीनां विकासाय ते स्वल्पमपि न प्रयतन्ते । अत एव इदमावश्यकं यदध्यापका आचारप्रधानां प्राचीनशिक्षां छात्रेभ्यो दद्युः । भारतीयसंस्कृतिरेवैकमात्रमुपचारश्छात्राणामनुशासनहीनतायाः । अद्यतना आध्यात्मिकभावनाशून्या अध्यापकवर्गा भौतिकसमृद्धये स्पृहयन्ते । एतादृशा अध्यापकाश्छात्राणां चरित्रनिर्माणं कर्तुं कदापि न प्रभवन्ति । पुरा आचार्याः स्नातकानुपदिशन्ति स्म— 'यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि ।' छात्रैर्गुणग्राहिभिर्भाव्यम् । वस्तुतस्तु शिक्षकः शिल्पी राष्ट्रस्य निर्माता च । अस्मिन्बहुव्यये युगे शिक्षका अपि स्वल्पवेतनेन असन्तुष्टाः । अतः इदं सर्वकारस्य कर्तव्यं यत्स प्रचुरवेतनं दत्त्वा शिक्षकान् तोषयेत् । अस्या-

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

भावस्य पूर्तिं विना छात्राणामनुशासनहीनता कदापि दूरीकर्तुं न शक्यते ।

शिक्षाप्रणाली—पाठचक्रमे शिक्षाप्रणाल्यां चापि परिवर्तनमनिवार्यम् । अद्यतनीना शिक्षाप्रणाली छात्राणां प्रतिभां कुण्ठति । तेषां व्यक्तित्वस्य विकासोऽप्यनथा न भवति ।

प्रजाप्रतिनिधिसभायाः सदस्यानामपि अवधानम् अनया समस्यया आकृष्टम् । तैरेकः प्रस्तावः अपारि यदनुशासनहीनतायाः कारणपरिज्ञानाय एक आयोगो नियोक्तव्यः । गतवर्षे 'विश्वविद्यालय-अनुदान-समिति' इत्येतयापि अनुशासनहीनतायाः कारण-निवारण-तत्त्वानि प्रकाशितानि । नैनीताले तथा खड्गवासलायाम् आयोजिते अखिलभारतीयोपकुलपतिसम्मेलनेऽपि सदस्यैः, शिक्षाशास्त्रिभिः, बी. बी. गिरिमहोदयैश्च पर्याप्तः उपायः अचिन्ति । तेषाम् इदम्मतमासीत् यत्—

१ निश्चितायुषः अधस्तनाः बालकाः विश्वविद्यालये न प्रवेशयेयुः ।

२ केवलं विज्ञानम् अथ च औद्योगिक-विषयौ एव विश्वविद्यालये पाठनीयौ ।

३ मानवीयविषयाणां न्यायादीनां ( विधि )शिक्षणं च स्नातकविद्यालयेषु विधेयम् ।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

४ द्वितीयश्रेण्याम् उत्तमोत्तमलब्धाङ्कप्राप्तिकर्तार एव विश्वविद्यालये प्रवेशमाप्नुयुः ।

५ राजनीतिकदलानि विश्वविद्यालयस्य प्रशासनादि अन्तरंगविषयेषु हस्तक्षेपणात् निगृह्णीयुः ।

६ परीक्षा-प्रणाली परिवर्तनीया परिष्करणीया च ।

७ छात्राः समस्तसत्रकालीनाय स्वकीयकार्याय आचरणाय च कानिचित् अङ्कानि लभेयुः । उपर्युक्त-विषयाणां कार्ये परिणत्यनन्तरमेव छात्रेषु अनुशासनहीन-तायाः समस्या निर्मूलतां यास्यति ।

शासनसंस्थायाः कृते तु शस्त्रास्त्रेभ्योऽपि समधिक-प्रयोजनीयमनुशासनम् । यदि शासनेऽनुशासनं न स्यात् सर्वमपि राष्ट्रम् क्षणादेव विश्रृंखलतां यायात् । अनुशासन-भङ्गसम्भवापराधभयादेव निम्नाः अधिकारिणः स्वतः श्रेष्ठानामधिकारिणामाज्ञामविचिकित्सं पालयन्ति । यदीदं न स्यात् सर्वोऽपि स्वमेव सम्राजमुत्प्रेक्षमाणो निखि-लान् नियमानेव शिथिलान् कुर्यादात्मनश्चेच्छया वर्तेत, येन राष्ट्रमेव विपद्येत । कीदृशोऽपि क्रमः शासनस्य कथं न भवतु—प्रतिनिधिशासनम्, एकराजवादः, स्वबलकृतं प्रातिनिध्यमाधारीकृत्य चलितं शासन्, वैदेशिकं, स्वदेश-सम्भवं वा शासनमस्तु, नानुशासनमन्तरा सिद्ध्यति साफल्यमिति हि भूतार्थव्याहृतिः ।



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

युद्धेऽपि दृश्यते—अनुशासनशून्याऽल्पानुशासना वा बहुसंख्याकाऽपि सेनाऽल्पसंख्याकयापि सम्यगनुशासनशालिन्या सेनया पराजीयते। सेनायां तु सैनिकास्सद्यो विपदं पुरः पश्यन्तोऽपि सेनापतेराज्ञया अग्रत एव प्रतिष्ठन्ते, न स्वं विचारं पुनरावर्तयन्ति चेतस्यपि। इदमुत्तमस्यानुशासनस्य निदर्शनम्।

एवं सञ्जातानुशासनाः सर्वत्रापि वर्त्मसु साफल्यं लभन्ते, जीवनं च फलवत् विदधते।

अतश्च ज्ञायते यज्जीवने साफल्यमानेतुं अनुशासनमत्यपेक्षितं वस्तु। तेन सर्वैरपि स्वहितमर्थयमानैरनुशासनेनात्मा नियमनीयः। अनुशासनं सौवर्णी शृंखला, सा मलमपि जनयति स्वाधिष्ठिते भागे, परमियं तमपि दोषं न स्पृशति। परमात्मा सर्वानपि भारतीयान् साध्वनुशासनयन्त्रितान् विदधातु।

प्रश्नाः

१. अनुशासनस्य किं स्वरूपम् अस्ति ?
२. बालकानां भविष्यजीवनं कथं तेभ्यः महत्त्वमुपहरिष्यन्ति ?
३. कथं कुत्रापि विवादाविश्वासादयः पदमादधते ?
४. छात्राः कदा मनुष्यपदं लब्धुं समर्थाः ?
५. छात्राणां चरित्रनिर्माणस्य कानि साधनानि सन्ति ?
६. प्रजाप्रतिनिधिसभा किमकार्षीत् ?

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

७. विश्वविद्यालयानुदानसमित्या किमकारि ?

८. अखिलभारतीय उपकुलपतिसम्मेलनस्य किं मतमासीत् ?

९. शासनसंस्थानाम् कृते कथमिदम् आवश्यकम् ?

१०. युद्धे अनुशासनस्य किं निदर्शनम् दृश्यते ?

११. कथमिदं 'सौवर्णी शृंखला' शब्देन उच्यते ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

# विज्ञानस्य प्रगतिः

साम्प्रतम् विज्ञानस्य असाधारणेन चमत्कारेण संसारस्य सम्पूर्णा परिस्थितिरेव नवीनरूपे परिवर्तिता दृश्यते। सर्वेष्वेव देशेषु विशेषेण पाश्चात्त्येषु प्रतिदिनं नूतनैः अनुसन्धानैः, अभिनवैः आविष्कारैश्च प्रभावितं समस्तमेव मानवजीवनम् अभिनवमिव संजातम्। विद्यानां कलानां



च सर्वासामेव क्षेत्रेषु प्रसृतमस्ति विज्ञानस्य साम्राज्यम्। ऐतिहासिकघटनानां सत्यत्वस्य वैज्ञानिकदृष्टचैव समीक्षणं परीक्षणं च क्रियते। मानवस्य सर्वाण्यपि कर्माणि अद्यत्वे वैज्ञानिकाविष्काराणां साहाय्येनैव सम्पद्यन्ते। चिकित्साप्रणाल्यासपि विहितम् आमूलपरिवर्तनम् विज्ञानेन

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

चिकित्सकैः। मूढश्रद्धायाम् अन्धविश्वासे च शैथिल्योत्पादनेन धर्मेऽपि विज्ञानचमत्कारः स्वप्रभावं प्रदर्शितवानेव। भौतिकविज्ञानम्, रसायनम्, जीवविज्ञानम्, वनस्पतिशास्त्रम्, ज्योतिषविज्ञानम्, खगोलशास्त्रम्, इत्यादयः बहवः सन्ति विस्तृता विभागाः विज्ञानस्य।

विज्ञानस्य महिम्ना बहवो लाभाः संजाताः मानवसमाजस्य। धूमशकटम्, वाष्पयानम्, वायुयानम्, जलयानम् इत्यादीनां यात्रासाधनानां सौलभ्येन सुदूरस्थान्यपि स्थानानि समीपस्थानि संजातानि। नवीनयन्त्राणां साहाय्येन सुदूरस्थानामपि देशानां समाचारं क्षणेनैव ज्ञातुं शक्नोति स्वस्थानस्थित एव मानवः। आकाशवाणी( रेडियो )यन्त्राणां प्रभावेण विश्वस्य कस्मिन्नपि कोणे क्रियमाणं भाषणं, गीयमानं मनोहारि गीतं, महापुरुषैः प्रदीयमानं धार्मिकं राजनीतिकं, सामाजिकं चोपदेशं स्वगृहस्थित एव पुरुषः अल्पव्ययेनैव श्रोतुमर्हति। दूरदृष्टियन्त्रम् (टेलीविजन) अपि 'आई० एल० बेर्ड'-नाम्ना वैज्ञानिकेनाविरक्रियत। दूरस्था व्यक्तिरपि अस्य साहाय्येन हस्तामलकवत् द्रष्टुं पारयति। धर्मस्य, शिक्षायाः, कृषेः, उद्योगस्य, सदाचारस्य, आरोग्योपायस्य, च साधनानि आकाशवाणीयन्त्रेण सुलभानि कृतानि। आधुनिकानाम् वायुयानानाम् आविर्भावात् पूर्वं वाल्मी-

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

कीयरामायणे आदिकविना वर्णितस्य पुष्पकविमानस्य सद्भावेऽपि सन्देहवन्तः आसन् अश्रद्धालवो मानवाः ।

चिकित्सापद्धतौ अपि महती समुन्नतिः संजाता विज्ञानस्य महिम्ना । प्रतिदिनं नवीनानि साधनानि आविष्क्रियन्ते भयंकराणामपि व्याधीनां चिकित्सकैः । अन्तर्वीक्षणयन्त्राणां ( एक्सरे ) साहाय्येन शरीरावयवानाम् आभ्यन्तररोगाणामपि स्पष्टतया निरीक्षणम् तत्प्रतीकारश्च वैज्ञानिकरीत्यैव समारब्धः । 'सर्पगन्धा'नाम्नः भारतीयवनौषधिविशेषस्य प्रभावेण असाध्यः 'रक्तचापो'ऽपि उन्मूलनीयः संजातः । भारतीयशासकैः निर्मितस्य 'कैप्स्यूल' इत्यस्य प्रभावेण सन्ततिनियमनम् सर्वथा दोषरहितम् अनर्घतमम् यथा स्यात्तथा विधीयते । 'एरोस्पोरिन'नाम्ना औषधविशेषेण 'कुत्ताखाँसी'नामा असाध्यो रोगः दूरीक्रियते । 'रेडियम' इत्येतस्य अनन्तरम् 'कोबाल्ट'किरणैः 'कैंसर'सदृशोऽपि राजरोगः विनश्यते । दीपशलाकाः, सूचिकाः, विद्युत्प्रकाशः, विद्युता प्रचाल्यमानानि व्यजनादिसाधनान्यपि विज्ञानमहिम्नैव सुलभानि जातानि ।

उपर्युक्तयानादीनाम् अनन्तरम् अन्येऽपि यातायातसाधनविशेषाः आविष्क्रियन्ते । जर्मनीदेशस्य 'अलबर्ट साइमन' महोदयेन संसारे विशालतमम् विमानम् निर्मीयते । जर्मनदेशे निर्मीयमाणम् 'वाक्स वैगन ऑफ द

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

एयर' नाम यानम् सर्वजनग्राह्यम् भविता। अमेरिकादेशे निर्मितानि 'उड़न खटोला' 'हवाई साइकिल' प्रभृति यात्रासाधनानि नवीनतमानि उत्तमानि च सन्ति।

'केनेथ फ्रायड' महोदयेन निर्मितः 'रोबेट' नामा यन्त्रमस्तिष्कः गणित-आधुनिकघटनाचक्र-इतिहासादिसम्बद्धप्रश्नान् उत्तर्तुं शक्नोति।

'जेकोस्लोवाकिया'देशस्य वैज्ञानिकैः निर्मितम् 'आलू'संज्ञकम् वस्तु मोदकसदृशम्, 'विटामिन सी' युक्तम्, पाकानन्तरमपि विटामिन-पूर्णमेव तिष्ठति।

एकत्र विज्ञानेन यथा अनेकानि उपयोगिवस्तूनि प्रस्तुतानि तथैव अन्यत्र सृष्टिसंहारकाणि अपि शस्त्रास्त्राणि सम्पादितानि। विगतमहासमरे जापानस्य हिरोशिमाख्यनगरी परमाणुबमेन समूलं ध्वंसिता। उद्जनबमः इतोऽप्यधिकः संहारकारी संजातः। रूसामेरिकाभ्याम् आविष्कृतानि क्षेप्यास्त्र-राकेट-मेगाटनादिसंहारकास्त्राणि एकस्मिन्नेव क्षणे जगतीतलं रसातलं कर्तुं शक्नुवन्ति। विषाक्तवायोः प्रयोगेण सर्वे मनुष्याः, पशवः, पक्षिणश्च प्राणान् त्यजेयुः। शक्तिशालिभिः राष्ट्रैः कृतेन बम-विस्फोटेनैव किरणसक्रियताजन्यविकारेण नानानर्थानि सम्भावितानि सन्ति। विश्वस्य अखिलो मानवसमाजः भयभीतः सन्त्रस्तश्च प्रतिक्षणं तिष्ठति प्राणापहारिभ्यः भयंकरेभ्यः तेभ्यः

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

शस्त्रास्त्रेभ्यः। समृद्धदेशेषु वैज्ञानिकाः भयंकरतमशस्त्रास्त्राणि आविष्कर्तुं प्रयतमानाः शासकैः प्रोत्साह्यमानाश्च दृश्यन्ते। परिणामतः कस्मिन्नपि क्षणे विश्वविनाशोऽपि एभिः क्रियमाणः जायेत इति नाश्चर्यकरम्।

अथ च एकमपि यन्त्रम् मनुष्याणां शतस्यापेक्षया क्षिप्रतरं कार्यं सम्पादयतीति हेतोः बहवः मानवाः कार्यरहिताः संजायन्ते प्रतिदिनम्। प्रत्येकं कार्यक्षेत्रे यन्त्राणां प्रवेशेन असंख्याः कर्मकराः मनुष्याः कार्यविहीनाः बुभुक्षिताश्च म्रियन्ते। जीविकाभावेन क्षुधा पीडिताः नराःचौर्यादिदुष्कर्मसु निरताः संजायन्ते। धनस्येव धर्मस्य सदाचारस्य च भवति महान् विनाशः विज्ञानेन। कार्यहीनतायाः समस्या देशेऽस्मिन् भयंकरं स्वरूपं धृतवती इति विचिन्त्य चिन्तामग्नाः दृश्यन्ते मानवतायाः उपासकाः विचारशीलाः देशभक्ताः। भारतवर्षस्य प्राचीनाः ग्रामोद्योगाः विनष्टाः एव संजाताः नवीनयन्त्राणां प्रवर्तनेन। अनाथाः दीनाः विधवाश्च जीवनसाधनं विना अत्यन्तकष्टमयं जीवनं यापयन्ति। अत एव सूक्ष्मविचारकेण अखिलप्राणिनां हितैषिणा महात्मना गान्धिमहाराजेन यन्त्रप्रवर्त्तनं यन्त्रनिर्मितानां वस्तूनाम् उपयोगश्च निषिद्धः।

मानवानां विलासितायाः, आवश्यकतायाश्च वर्धनेन

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

महद् अनिष्टं सम्पादितं विज्ञानेन। विज्ञानस्य बाह्यं मोहकं स्वरूपं दृष्ट्वा तदाकृष्टमानसो मानवः परमेश्वरं मानवतां च विस्मरति। इन्द्रियाणां मनसश्च निग्रहं, द्वन्द्वसहनं, कर्तव्यपरायणतां, साहसं, धैर्यम्, इत्यादि मानवधर्मान् विहाय इन्द्रियलोलुपतया विषयोपभोगनिरताः मनुष्याः कथं मानवजन्मनः मुख्यं लक्ष्यं परमेश्वरभजनं परोपकारं वा कर्तुं शक्नुयुः। अत एव महायन्त्रप्रवर्तनस्य उपपातकेषु परिगणनं कृतं त्रिकालज्ञेन महात्मना मनुना। अस्माकं पूर्वजैः सर्वज्ञैः, सर्वशक्तिमद्भिरपि मानवजातेः कल्याण-कामनयैव कृत्रिमयन्त्राणाम् उपयोगो न कृतः। हन्त! शरीरं रक्षित्वापि विवेकं दूषयित्वा आत्मानमेव विनाशित-वान् विज्ञानस्य दुरुपयोगः। यथार्थमेवोच्यते विचार-शीलैर्मानवैः—

विज्ञानस्य प्रभावेण समृद्धिः क्षणभङ्गुरा।
संजाता महती बाधा मानवत्वविनाशिनी॥

अत एव यावत् मानवाः दया-करुणा-उपकारप्रभृति-मानवतासहजगुणाभिभूताः सन्तः विज्ञानम् न प्रयुञ्जन्ति तावत् विज्ञानस्य सर्वे घातकप्रयोगाः आत्मघातोपमाः मानवता-विनाशाय संभविष्यन्ति। यावत् सर्व-सामान्यानाम् हितबुद्ध्या प्रयोगो न भवेत् तावत् विज्ञानम् विश्व-शान्ति-कार्ये नहि साधकम् अपि तु बाधकमेव स्यात्।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

अयमेव सन्तोषः यत् एतदर्थं सर्वे राष्ट्राः राष्ट्रप्रमुखाः च प्रयतमानाः सन्ति ।

**प्रश्नाः**

१. कुत्र कुत्र विज्ञानस्य प्रभुत्वं परिलक्ष्यते ?
२. विज्ञानेन के लाभाः अभवन् ?
३. चिकित्सापद्धतौ विज्ञानेन किं किं परिवर्तनं कृतम् ?
४. विज्ञानेन आविष्कृतानाम् यात्रासाधनानाम् कानि नामानि सन्ति ?
५. यन्त्रमस्तिष्कः किं कर्तुं शक्नोति ?
६. कानि संहारकास्त्राणि अधुना विरचितानि ?
७. विज्ञानेन काः काः क्षतयः कृताः क्रियन्ते च ?
८. गान्धीजीमहात्मना यन्त्रनिर्मितवस्तूपयोगः कथं निषिद्धः ?
९. मनुना यंत्रप्रवर्तनस्य उपपातकेषु कथं परिगणनं कृतम् ?
१०. कियदवधि विज्ञानस्य प्रयोगाः घातकाः संभविष्यन्ति ?
११. सर्वे राष्ट्रनायकाः किमर्थं प्रयतमानाः सन्ति ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

## समाचारपत्रम्

यानि लघूनि बृहदाकाराणि वा पुस्तकानि नियततिथिषु भिन्नभिन्नस्थानानां समाचारान् संकलय्य सम्पाद्य च मुद्रितानि कृत्वा विक्रीयन्ते तानि समाचारपत्राणि कथ्यन्ते ।



सर्वे सभ्याः साक्षराः पुरुषाः स्त्रियश्च स्वस्य नगरस्य, प्रान्तस्य, देशस्य, विदेशानां च अवस्थां ज्ञातुं प्रतिदिनं नवीनां जायमानां सामाजिकीं राजनैतिकीं च परिस्थितिम् अवबोद्धुं सर्वदैव समुत्कण्ठिताः भवन्ति। तेषाम् औत्सुक्यस्य शमनाय, मनसः सन्तोषणाय च समाचारपत्रमेव उपयोगि सुलभं च विद्यते साधनम् । अनेन स्वगृहे स्थिता एव पुरुषाः देव्यश्च स्वदेशस्य विदेशानाञ्च अभिनवसमाचारान् अल्पव्ययेनैव ज्ञात्वा विश्वस्य मानवैः सह तेषां दुःखे समवेदनां, सुखे आनन्दानुभूतिं च प्रदर्श्य सुदृढसम्बन्ध-

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

मिव स्थापयन्ति इति सद्भावनयैव समाचारपत्राणाम् प्रथम आविर्भावः आसीत् ।

एषु केवलं समाचारा एव न भवन्ति, किन्तु मानसिक-चारित्रिक-व्यावहारिकसमुत्कर्षसम्पादकाः विचाराः अपि प्रकाश्यन्ते । मासिक-त्रैमासिक-षाण्मासिकवार्षिक-पत्राणां तु पुस्तकतयैव परिगणनं समुचितं तेषु समाचारस्यानादरणीयतया उल्लेखात्प्रबन्धप्रकाशनस्यैव तेषामुद्देश्यत्वात् । एषां समाचारपत्राणां न कश्चिदेको नियतो लेखकः, परन्तु भिन्नभिन्नपुरुषैर्लिख्यमानानां लेखानां सम्पादनाय कश्चिदेकः प्रधानसम्पादकस्तिष्ठति, यो रीतिं, नीतिं च नियमयति । स एव च तत्र प्रकाश्यमानानामर्थानामुत्तरदायी मन्यते ।

सर्वप्रथमं समाचारपत्रम् इटलीदेशस्य वेनिसनगरे प्रकाशमासादयत् । तदुद्भवान् लाभान् दृष्ट्वा यूरोपस्य सर्वे देशाः समाचारपत्राणां प्रकाशनमारब्धवन्तः । महाराज्ञ्याः एलिजाबेथनाम्न्याः शासनकाले इङ्गलैण्डदेशे सर्वप्रथमस्य समाचारपत्रस्य प्रकाशनं प्रारभत । अस्माकं भारते देशे तु चत्वारिंशदुत्तरे सप्तदशशत( १७४० )तमे ईशवीयवर्षे 'इण्डिया गजट'नामकस्य पत्रस्य प्रथमं प्रकाशनं प्रावर्त्तत । सम्प्रति तु संख्यामीषां सहस्रमप्यतिशेते । परमियमपि संख्या देशान्तरीयपत्रसंख्यया तुलनायां लघुतमैव ।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

सर्वेषामपि समाचारपत्राणां कर्तव्यतया निर्धारित-मुद्देश्यं भिन्नं भिन्नं भवति। किमपि राज्ञो जनतायाश्च वृत्तम् अन्योन्यस्य समीपे समुपस्थापयति येन तदीयं पारस्परिकं मालिन्यमपयाति। किञ्चिच्च पत्रं सदा जागरूकं सत् देशस्य राजनीतिकीं गतिं नियन्त्रयति। किञ्चन च धार्मिकीं स्थितिं समेधयति। एवमन्यत्। सम्प्रति प्रायः प्रचलितेयं परिपाटी यत् या संस्था स्वीयं प्रचुरं प्रचार-मिच्छति तस्याः मुखपत्रं प्रचरत्येव, येन तदीयमभिमतं जनानां पुरः स्थाप्यते। समाचारपत्रै राजानो नियम्यन्ते, शासनसूत्रम् तथा समालोच्यते यथा नापैति पथः। इत्थं समाचारपत्राणि अधिकृतान् सुपथि नियच्छन्ति विप-थाच्च वारयन्ति कार्यनिर्वाहणे च पटीयसः कल्पयन्ति। यत्र देशे विधानपरिषदि सुव्यवस्थितं प्रतिद्वन्द्विसभं नास्ति तत्र समाचारपत्राण्येव तत्कृत्यं निर्वर्तयन्ति। इमानि समाचारपत्राणि यत्र क्वापि महाजने वा जने वाधिकृते वानधिकृते वाऽऽढ्ये वाऽऽनाढ्ये वाऽऽचारव्यतिक्रमं शीलभ्रंशं वा दम्भं वा विप्रलम्भं वा प्रतिज्ञाभङ्गं वार्थदूषणं वाऽभीतवत् विनिन्दन्ति मर्यादाश्च गोपायन्ति, शिष्टा-नुद्भावयन्ति दुष्टांश्च न्यग्भावयन्ति। राजानः खल्वप्य-मीभ्यो बिभ्यति मैतानि नश्चरितमालुलोचन्निति। लोक-मान्यतिलकः केसरिमराठापत्रयोः आंग्लशासकानाम्

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

उच्छृंखलशासनस्य विरुद्धं निर्भयतया ओजस्विनः लेखान् लिखित्वा संत्रस्तभारतीयानां म्रियमाणहृदयेषु अभिनव-जीवनं संचारितवान् । महात्मा गान्धिमहोदयोऽपि यङ्ग-इण्डिया-हरिजनपत्राभ्यमेव सत्यस्य अहिंसायाः प्रेम्णश्च प्रचारं कृतवान् । महामनसा मदनमोहनमालवीयेनापि राष्ट्रजागरणाय लीडरनामधेयस्य आंग्लपत्रस्य, हिन्दीपत्रस्य 'अभ्युदय' स्य च उद्भावनं कृतमासीत् ।

वणिक्पथस्यापि बहूपकुर्वन्तीमानि । बहौ ह्यत्र तद्विषयिणी विज्ञापना भवति । अद्यास्य पण्यस्यात्रनगरे इयानर्घः, अत्र देशे सुदुर्लभानि इमानि पणितव्यानि देशान्तरविशेषे सुलभानि, अत्रैव वा देशे पत्तनविशेषेऽमी अर्था एतावता मूल्येन सुप्रापा इत्यादि विज्ञाप्य संव्यवहारं प्रकर्षन्ति । मूल्यविज्ञप्तिभिश्च सर्वत्र देशे मूल्यानि स्थेयांसि सम्पाद्यन्ते येनैकस्यैव द्रव्यस्य तुल्यगुणस्य मूल्यमनेकत्र प्रदेशेषु नातिदूरं विप्रकृष्यते, लोकश्च चिकीर्षुर्नातिसन्धीयते न चोपपीड्यते । एकत्राविष्कृतस्य कस्यापि पदार्थस्य यन्त्रस्य वा प्रचारः समाचारपत्रैरेव क्रियते येन तन्मूल्यं वर्द्धते, तदाविष्कर्तुश्च प्रतिष्ठा समेधते ।

समाचारव्यतिरिक्तमप्यनल्पं तत्र वेद्यं भवति । एतत्पार्श्वेषु विज्ञानानुसन्धिविवरणानि, पुरातनेतिहासतथ्यादीनीदम्प्रथमतया समुपलब्धानि, यात्रावर्णनानि,

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

चिरनिखातग्रामनगराद्युत्खननलब्धान्यर्थाश्चर्याणि, अविदितचरभूभागाद्युपलब्धिवृत्तानि, साहित्यसमीक्षणानि विद्वत्कृतानि, नव्यग्रन्थानां गुणदोषालोचनानि च दृश्यन्ते। यत्र तत्र गंभीरार्थाः उदाराः प्रबन्धा अपि तं तं विषयं विशदयन्तः सन्निवेशं लभन्ते। प्रतिरविवासरं प्रकाशितेषु पत्रेषु विद्यां शिक्षां चाधिकृत्यानुबन्धा निबध्यन्ते, यत्राभिविनीतानामपि बहूपादेयं भवति किमुत विनेयानाम्।

इदं चाभ्युपेयं यो नाम प्रत्यहं समाचारपत्राण्यधीते स शास्त्रैकशीलनरताद्बहुश्रुतात् विशदतां व्यवहारं विजानाति, मेधीयान् प्रबुद्धतरश्च भवतीति।

एवमप्यभ्युपेयम् भवति यत् बहुधा समाचारपत्राणि नृपनीतिविदां, संघविशेष्वेव वर्गविशेष्वेव पक्षपातीनि भवन्ति। युक्तं वाऽयुक्तं वा तद्दर्शनमेव पुष्णन्ति दर्शनान्तरं युक्तमपि दूषयन्ति, महान्तं चापायमापादयन्ति, आयतिं च विकुर्वन्ति। तेनैषामेकत्र पक्ष्यता गर्ह्या तटस्थता च प्रशस्या। अत्र स्थितौ कदाचित् सम्पादकाः दण्डमपि लभन्ते। परंतु सम्पादकैः सदा निर्भीकैः सत्यव्यवहारिभिः विघ्नबाधासहिष्णुस्वभावैश्च भाव्यम्। बहु च तेष्वायत्तम्। तन्मुखदर्शिन्यः प्रजाः पथि वर्तेरन्नापथीति प्रेर्याः। एवं सत्येव पत्रस्य गौरवं भवति।

केषांचिन्मनुष्याणां समाचारपत्राणां पठनं व्यसन-

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

मिव जायते। ते तत् अपठित्वा मनसः शान्तिमेव न लभन्ते। इदन्तु अत्यन्तम् अशोभनम्। बहवश्छात्रास्तु पाठ्यग्रन्थानाम् अध्ययनं परित्यज्य प्रतिदिनं विभिन्नपत्राणां पठने समयं यापयित्वा परीक्षासु असफलताम् अङ्कान् न्यूनान् वा लभन्ते। समाचारपत्रपरवशतां तु न शोभनां मन्यन्ते मनस्विनः। मनोविदोनार्थं, समाचारज्ञानार्थं, भाषाज्ञानवृद्धयर्थं वा उपयुज्यमानमपि समाचारपत्रं न मुख्यपाठ्यग्रन्थस्थानीयं, न वा धर्मग्रन्थस्थानापन्नं भवितुम् अर्हति। मनोरञ्जनसाधनान्येव पत्राणि भवेयुः नैव वास्तविकस्वाध्यायविषयाणि। ग्राह्योऽयं सदुपदेशः—

पठेत् संवादपत्राणि मनोरञ्जनसिद्धये।
भाषाज्ञानस्य वृद्धयै वा न तु स्वाध्यायग्रन्थवत्॥

**प्रश्नाः**

१. कानि समाचारपत्राणि कथ्यन्ते ?

२. समाचारपत्राणामाविर्भावः कथमभूत् ?

३. समाचारादतिरिक्तं कीदृशाः विचाराः तत्र प्रकाश्यन्ते ?

४. समाचारपत्रस्य प्रथम आविष्कारः कुत्राभूत् ?

५. इंग्लैण्डे भारते च कदा सर्वप्रथमं समाचारपत्रप्रकाशनमभूत् ?

६. समाचारपत्राणां किं किं भिन्नम् उद्देश्यं भवति ?

७. तिलक-गान्धी-महामनसाम् कानि पत्राणि किं किमकुर्वन् ?

८. समाचारपत्रम् कथं वणिजाम् हितं कुर्वन्ति ?

९. मुख्यपाठ्यग्रन्थस्थानीयमपीदं भवितुमर्हति ?

१०. एतदर्थं कः उपदेशः ग्राह्यः ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

# प्रजातन्त्रस्य प्राणाः ( श्रीनेहरूमहाभागाः )

अद्यतनभारतस्य नाम्ना सह जवाहरलालमहोदयस्य नाम अविच्छिन्नरूपेण सम्बद्धं विद्यते। भारतीया यावती समुन्नतिर्जाताऽस्ति, यावानभ्युदयोपायः प्रक्रम्यमाणो दृश्यते, सर्वत्रास्य भारतीयहृदयसम्राजः प्रभावः प्रकट-रूपेण दृश्यते। अस्य महापुरुषस्य प्रभावेण हीनं भारतस्य किमपि वाह्यमान्तरिकं वा स्पन्दनं नोपलभ्यते। न केवलं भारतमेव अपि तु सकलमपि पश्चात्पदं राष्ट्रजातं स्वस्वो-दयाय मुक्तिसेनापतेः विश्वशान्तेरग्रदूतस्यास्य मुखमुन्मुखी-भूयावेक्षते। स्वतन्त्रभारतस्य मान्यः प्रधानमन्त्री अस्य विश्वस्य महती विभूतिः। विश्वराजनीतेः रङ्गमञ्चेऽपि नेहरूमहाभागस्य स्थानं गौरवमयं प्रतिष्ठापूर्णं च विद्यते। दृढतायाः भावुकतायाश्चास्य प्रतीकस्याग्रे श्रद्धया मस्तकं स्वयमेव नम्रीभवति।

प्रयागस्थमीरगञ्जमुहल्लानिवासिनः प्रख्यातनाम्नः वाकीलस्य योग्यपितुः श्रीमोतीलालनेहरूमहोदयस्यायं योग्यपुत्रः एकोननवत्युत्तरेऽष्टादशशततमे ईशवीये वर्षे (१८८९) जन्म लेभे। पितुः श्रीमोतीलालमहोदयस्य समृद्ध-तयाऽस्य बाल्यकालः राजकुमार इव महता प्रमोदेन व्यतीतः। अस्मिन् संस्कृतेऽथ सुसम्पन्ने च वातावरणे समुत्पन्नस्य



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

जवाहरलालस्य मनसि बालकालादेव महान्तः आदर्शवन्तश्च

संस्काराः पदं चक्रिरे। अस्मिन्मनोरमे वातावरणे तस्य

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

स्वाभाविक्या: प्रतिभाया: वाञ्छनीया प्रगतिरभवत्। तस्य प्रारम्भिकी शिक्षा गृहे एव वैदेशिकशिक्षाशास्त्रिणां तत्त्वावधाने प्रारभ्यत, येनाल्पेनैव कालेनास्य ज्ञानवृद्धिः जाता। श्रीएनीबेसेण्टमहोदयाया: सम्पर्केणास्य रुचिः थियोसोफीनामनि आध्यात्मिकप्रस्थाने सञ्जाता।

यदायं पञ्चदशवर्षीयस्तदाऽसौ इङ्गलैण्डेऽध्ययनाय पित्रा प्रेषितः। तत्र हैरोस्कूलात् विद्यालयपरीक्षामुत्तीर्य कैम्ब्रिज-विश्वविद्यालयान्तर्गते ट्रिनिटिमहाविद्यालये प्राविशत्। ततः १९१० तमे ईशवीयाब्दे एम्. ए. परीक्षामुदतरत्। तदनन्तरं स लण्डननगर्यां विधानपरीक्षामपि उत्तीर्य लब्धोपाधिर्भारतं प्रत्याययौ। पितुर्विशालो न्यायव्यवसाय-स्तस्मै नारोचत। भारतजननी विदेशीयबन्धनैः कथं विमुक्ता भवेदियमेव समस्याऽहर्निशं तस्य शिरोवेदनाम् अकरोत्।

फलतः महानुभावोऽयं राष्ट्रियान्दोलने भागं ग्रहीतु-मारब्धवान्। गोखलेमहोदयस्य साभापत्ये पटनाकांग्रेसा-धिवेशने भागं गृहीतवान्। तदानीन्तने 'होमरूल'संज्ञके आन्दोलनेऽप्ययं भागमनयत् तथा भारतीयानां सहायतायै अफ्रिकायां महात्मना गान्धिमहोदयेन प्रवर्त्तमानमान्दोलनं बलवत्तरं कर्तुं संगृह्यार्धलक्षमितं धनकोषं तत्र प्रेषितवान्, येनास्य प्रभावः नितरामवर्धत।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

राष्ट्रियान्दोलने भागं गृह्णन्नप्ययं विधिव्यवसायमप्यकरोत्। परन्तु देशभक्तिवशीकृतहृदयोऽयं विधिव्यवसायं सर्वात्मना कर्तुम् नापारयत्, पश्चात्तु स व्यवसायस्त्यक्तोऽपि।

१९१६ तमे ईशवीयाब्दे श्रीमती कमलादेवी अस्यार्धाङ्गिनीपदमभूषयत्। तस्यैव पाणिग्रहणस्यावसरेऽयं काश्मीरेषु भ्रमणं कृतवान्। अत्रैव वर्षे लखनऊकांग्रेसावसरे महात्मना गान्धिमहोदयेन सहास्य साक्षात्परिचयो जातः। एतदनन्तरं देशे तास्ताः 'जालियां वाला बाग' 'मार्शल ला' प्रभृतयो घटनाः जाताः, याः अस्य गतिविधिं सर्वथा क्रान्तिमयीमकुर्वन्।

तदैव प्रथममहायुद्धावसरे ब्रिटिशसर्वकारः 'रौलट एक्ट' नाम दमनकारि विधानं भारतीयानां पुरस्तात् प्रास्तौत्। तद्विरोधाय श्रीगान्धीमहानुभावोऽसहयोगसत्याग्रहमारभत। महात्मनो गान्धिनोऽसहयोगान्दोलने स्वपित्रा सहैव जवाहरलालोऽप्यकूर्दत। एवं च वैभवस्यामोदकरं मनोमोहनं चाकर्षणं शाश्वतकालं यावत् परित्यज्य देशस्यायं महान् कर्णधारः राष्ट्रसेवायामात्मानं नियोजयामास। राष्ट्रं च पराधीनतापाशाद्विमोक्तुं तनुमनोधनैः प्रायतत। भारतीयस्वतन्त्रतासंग्रामस्यासावप्रतिमो योद्धा। पञ्चविंशतिवर्षीये दीर्घकालिके संघर्षे सदैव सोऽग्रणीरासीत्।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

पं० मोतीलालनेहरूमहोदयः प्राक् तस्य विचारधारायाः प्रबलो विरोधी आसीत्। परं कियत्कालानन्तरं सोऽपि पूर्णं सहयोगमददात्।

१९२१ तमे ईशवीयाब्दे सम्राट्कुमारस्य स्वागतं विरुन्धन् अयं कारावासदण्डं लब्धवान्। तदनन्तरं त्वयं कारावासमसकृत् प्रापत्। राष्ट्रस्याह्वानमाकर्ण्य अष्टवारानयं युवकहृदयसम्राट् कारावासं स्वीचकार। कतिपयवारं च भारतीयजनता इमं प्रियनेतारं कांग्रेसमहासम्मेलनस्य सभापतिपदप्रदानेन सभाजयामास। राष्ट्रस्यायं लोकप्रियो नेता स्वातन्त्र्यात्पूर्वमपि 'मुकुटरहितो भारतसम्राट्' इति ससम्मानमभिधीयते स्म।

१९२६ तमे ईशवीयाब्दे रुग्णायाः स्वधर्मपत्न्याः चिकित्सार्थमयं पुनर्विदेशं गतः, यत्र विदेशीयविशेषज्ञैः 'रोम्यां रोलां-'अर्नेष्ट स्टालर' प्रभृतिभिः सहास्य साक्षाद्विचारविमर्शो जातः। अत्रैव यात्रायामयं समाजवाद-नात्सीवादप्रभृतिविचारधाराणां गम्भीरमध्ययनं कृतवान्।

यूरोपात्परावृत्तस्यास्य व्याख्यानेषुव ह्विस्फुलिङ्गाः प्रकटिता आसन्। अयमेव सर्वप्रथमं १९३० तमे ईशवीयाब्दे जनवर्याः षड्विंशे दिवसे इरावत्यास्तटे लवपुरे स्वातन्त्र्यस्य महतीं घोषणामकरोत् यः कालेन कांग्रेससभया पारितोऽपि जातः। स्वतन्त्रतायाश्चिह्नं त्रिवर्णं ध्वजं तत्र

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

निचखान। श्रीनेहरूमहोदयस्य निर्भीकतायाः स्वतन्त्र-व्यक्तित्वस्य च एतादृशानि बहूनि निदर्शनानि सन्ति।

यदायं लाहौरकांग्रेसाधिवेशने सभापतिः सन् पूर्ण-स्वतन्त्रताया घोषणां कृतवांस्तदवधि देशस्य राजनीति-रन्यामेव दिशं प्रति प्रस्थिता। अत्र प्रक्रमेऽयं कारावास-मसकृत् प्राप्तवान्।

१९३२ तमे ईशवीयाब्दे पुनरयं 'किसान-आन्दोलन-स्य' सम्बन्धे कारावासं भेजे। ततो मुक्तमात्र एवायं विहारभूकम्पेन पीडितां जनतां सेवितुम् कुद्दालपाणि-रनावृतचरण एव च प्रस्थितः। तदानीन्तनमस्य साहसं स्मरन्तः विहारवासिनोऽस्य क्रीतदासा इवात्मानं मन्यन्ते स्म।

कारावासस्थितस्यैवास्य प्रिया भार्याधिकाऽस्वस्था भूत्वा विदेशं गता, यत्र सा पतिसाहचर्यं प्राप्याल्पेनैव कालेन मृता।

एतत्परतस्तु देशे क्रान्तिवात्या महता वेगेन प्रवहति स्म, यत्र मुख्यो नायकोऽयमसकृत् कारावासं प्रापत्। तत्रस्थितेनैवानेन 'डिस्कवरी ऑफ इण्डिया' प्रभृतीनि स्वीयानि प्रसिद्धानि पुस्तकानि प्रणीतानि।

१९४२ तमे ईशवीयाब्दे भारतत्यागान्दोलनेऽप्ययं प्रधानतमो योध आसीत्। कारावासस्थितोऽयं स्वाध्याय-लेखनयोः समयमनैषीत्। तत्रैव प्रणीताः 'विश्वेतिहास-

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

दर्शनम्' 'आत्मकथा'प्रभृतिग्रन्थाः महान्तं रचयितारमेनं विश्वलेखकरूपेण प्रतिष्ठापितवन्तः। तदनन्तरं ततो निर्गतोऽयं क्रिप्समिशनप्रभृतिराजनीतिघटनासु भागं गृहीत्वा देशस्य स्वतन्त्रतां समीपागतामकृत ।

यदा चेदमीयप्रयासभरेण भारतं स्वतन्त्रमजायत, तदायं सर्वापेक्षया दुरूहं दुर्वहं च प्रधानमन्त्रित्वमारोपितः, यत्र स्थितं जवाहरलालं भारतीयजनता समुदयमानं सूर्यमिवाहरहः प्रणमति। अद्यत्वेऽपि श्रीनेहरूमहोदयः भारतीयगणराज्यस्य प्रधानमन्त्रिपदं परिपूर्णतमया योग्यतया निर्वहन् राष्ट्रमुन्नयति । स्वातन्त्र्याधिगमनानन्तरं जगद् यद् गौरवमयं सम्मानं भारताय प्रादात्तस्य महच्छ्रेयः श्रीनेहरूमहोदयं गच्छति ।

श्रीनेहरूमहोदयः राजनीतिनेत्रतिरिक्तः महान् वक्ता, प्रशस्तो लेखकश्चापि वर्तते । अस्यार्थगम्भीरा प्रभावशालिनी वक्तृताऽनुपमा खल्वस्ति । आकाशवाण्या प्रसारितानि तस्य भाषणानि भारतीयानां हृदयेषु विद्युत इव सञ्चरन्ति । श्रीगान्धिनो निधनेऽसौ प्रयागे दशलक्षाणां श्रोतृणां समक्षे भाषणमकरोत् । विश्वस्येतिहासे नहि केनचित्तावत्संख्यकानां लोकानां समक्षेऽद्यापि भाषणं दत्तम् । किम्बहुनाऽयमेको नेता यस्य भाषणं श्रोतुं न केवलं

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

भारतीयानाम् अपितु विश्वस्यापि कर्णविवराणि शश्व-दुत्सुकानि भवन्ति ।

भगवान् भूतभावनः भारतीयजनतायाः समुन्नत्यै, मानवमात्रस्य कल्याणाय, विश्वशान्तेर्दार्ढ्याय वीराग्रगण्य-ममुं शतायुषं स्वस्थशरीरं च कुर्यात् ।

**प्रश्नाः**

१. केन केन सहास्य नाम सम्बद्धं विद्यते ?
२. अस्य जन्म-बाल्यकाल-शिक्षाविषये किं किं जानीथ ?
३. का समस्या जवाहरस्य शिरोवेदनाम् अकरोत् ?
४. कियद्धनं संगृह्य अफ्रीकायाम् प्रेषितमनेन ?
५. गान्धिमहात्मना सहास्य कुत्र परिचयोऽभूत् ?
६. काः घटनाः अस्य गतिविधिं क्रान्तिमयीम् अकुर्वन् ?
७. १९२१ तमे ख्रिष्टाब्दे कथमयं कारागारे प्रक्षेपितः ?
८. कदायं समाजवादादिविचाराणामध्ययनं कृतवान् ?
९. इरावत्यास्तटे का का योजनानेन प्रस्ताविता ?
१०. विहारवासिनः कथमस्य आभारिणः सन्ति ?
११. विश्वलेखकपदे के ग्रन्थाः एनम् प्रतिष्ठापयामासुः ?
१२. स्वातन्त्र्यस्य, भारतगौरवस्य च श्रेयः कं गच्छति ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

# जाति-व्यवस्था

जननेन प्राप्यते या सा जातिः। सा च ब्राह्मणत्वादिका। भुवि भारतवर्षवत् अन्यः कोऽपि देशो जातिभारेण आक्रान्तो नास्ति। सम्प्रति जातेः भेदोपभेदाः तावतीमतिभूमिं गता येन तस्या भेदानां गणना गङ्गातटप्रसृतसिकतागणनापेक्षयापि दुष्करा। इयं च जातिप्रथा न नवा। महाभारतकालेऽपि जातीनां सत्ता श्रूयते। ततः पूर्वतनासु उपनिषत्स्वपि जातिकथोपलभ्यते। इमां प्रथां प्रथमतः कः आविश्चकार इति नामग्राहं न निर्णेतुं शक्यते। परमस्याः मूले सामाजिकव्यवस्थायाः दृढीकरणस्य भावनया कर्मभेदनिर्धारणमेव कारणमवधारयामः। स्मरणीयेतिहासयुगतः पूर्वतनीं सभ्यतां पालयतोऽस्य देशस्य कतमयाऽऽवश्यकतया प्रादुर्भूतेयं जातिव्यवस्था इति यदा निर्णीतं भविष्यति तदा ऐतिहासिकाः परां मुदमुपैष्यन्ति। केचिच्च—

'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इति गीतायामीश्वरोक्तं प्रमाणयन्तोऽस्याः प्रथायाः अनादितां समर्थयन्ते। यदस्तु, तदस्तु। अस्याः प्राचीनतरतायां वयं दृढप्रत्ययाः।

ब्राह्मणोऽस्य मुखमासीद्, बाहू राजन्यः कृतः,

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

ऊरू तदस्य यद्वैश्यः, पद्भ्यां शूद्रोऽजायत इति सहस्रशीर्षाभिधानाध्यायगं मन्त्रं पश्यतां मतेऽस्याश्चत्वारो भागाः, अमी च भागाः कर्मानुसारेणैव कृताः। येऽध्ययनाध्यापनयाजनादिकर्म चक्रुस्ते ब्राह्मणाः, युद्धदेशरक्षाशासनाद्यधिकृताः क्षत्रियाः, कृषिवाणिज्यपशुपालनाद्यवलम्बमाना वैश्याः, दासताश्रिताश्च शूद्रा अकथ्यन्त। अत्र च स्मरन्ति—

'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः'।

समयानुकूलतया विधीयमाना चेयं व्यवस्था अद्यापि दृढमूलतया नाकम्पत।

इयं प्रथा पुरा काले संघट्यमानाया हिन्दुजातेः सुविधामाधातुमेव व्यधीयत। एकः सङ्घः एकस्य कर्मणः कृते नियुज्यमानो ( जातायामन्येषां सङ्घानां ततः कर्मणो निवृत्तौ ) यथा सफलतया प्रयस्यति न तथा तदन्यथाभावे। यथा—एकत्र विद्यालये पञ्च कक्षाः सन्ति। पञ्च प्रकोष्ठानि मार्जनीयानि विद्यन्ते। तत्र यदि प्रत्येकवर्गतः कतिपये छात्रास्तत्र व्यापार्यन्ते, साधु न तत्साध्यन्ते तैः। एकः पुनः समग्रवर्गः स्ववर्गस्य प्रतिष्ठामिव वर्द्धयितुम् प्राणान् पणीकरोति, साधयति च कार्यम्। एषैव गतिर्जातिव्यवस्थायामपि कर्त्तव्यविभागावधारणार्थायाम्। एवञ्च कर्मणा जातिव्यवस्थां सिद्धयन्तीं

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

पश्यन्तो धर्मशास्त्रविरोधं मा शङ्किषत। धर्मशास्त्राण्यपि गुणकर्मविभागशः सिद्ध्यन्तीं जातिव्यवस्थां न विरुन्धन्ति। केवलं यस्य जन्म क्षत्रियवंशे, तस्मिन् भूयसा स्ववंशसम्भवपूर्वजरक्तप्रवाहस्य स्वाभाविकतया तदुचितकर्मणामेव सुखं साधनीयत्वस्य सम्भवात्। सत्यपि क्वचिदन्यविधदृष्टान्ते तस्य क्वाचित्कतया व्यवस्थाप्रवर्तकत्वानङ्गीकारात्, भूयसा हि व्यपदेशस्य प्रसिद्धेः। तथा च क्षत्रियवंशप्रसूतस्य व्यापारप्रवृत्तत्वेऽपि पूर्वजरक्तमहिम्ना तस्मिन् व्यापारकौशलतत्त्वापेक्षया शासनसामर्थ्यबीजस्यैवाधिक्यस्य सम्भावनया (पूर्वजाचरितकर्मकृतजातिनिर्णयस्य व्यवहृतत्वाच्च) तथा व्यवहारस्य युक्तत्वम्। अस्याश्च व्यवस्थायाः पुरा महानादरः आसीत्। अस्याः रक्षणाय कियतां प्राणानां क्षतिरपि समाजेन सुखमसह्यत। जातिनियमानां पालनाय बहवः क्लेशा अपि निश्शब्दं स्वीक्रियन्ते स्म, का कथा जातेः? उपजातीनां ज्येष्ठभावाभिमानमात्रफलानां जातितदुपभेदाविर्भावितसत्ताविशेषाणां रक्षणायापि बहु चेष्टितमस्माभिः। अशेषदोषदूषितस्यापि जातिश्रेष्ठस्य कृते महानादरः कृतः 'जातिगङ्गा गरीयसी' इत्याभाणकोऽपि जन्मलभ्यजातिपरकतया समर्थितः।

एवं सम्प्रति जातिव्यवस्थायाः अनादरस्य वायुः

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

प्रवहमान इव भवति । कतिपये ब्राह्मणा अपि कस्यापि शूद्रस्य वैश्यस्य वा जातौ यौनं भोजनादेर्वा सम्बन्धं कर्तुं प्रवृत्ता दृश्यन्ते, जातिनियमानामपालनेऽपि न पुरेव क्लिश्यन्ते। परमिदं परिवर्तनं नाकस्मिकम् । न वा कस्यापि निरूढप्रभावस्य प्रचारस्य फलम् । किन्तु सम्प्रति सभ्यतासंघर्षमये समये नानाप्रान्तदेशीयजन-समाजस्य जाते दैनन्दिने सम्पर्के स्वाभाविकेनाकर्षणेन जन्यते । इदं तु दिनानुदिनमेधमानमेव सम्भाव्यते । न च एतावन्मात्रेणैव जातिव्यवस्थाभिमानशालिभि-रस्माभिर्भेतव्यम् । भगवता कृताया अस्या नाशस्यापि तदधीनत्वात्, तेन कृते च नाशे शोच्यताविरहात् ।

यत्र जातिव्यवस्थया समाजः परिचालितः, सर्वेऽपि समाजसङ्घाः उचितकर्तव्यनिर्णयेनासंकीर्णव्यापाराः कृताः । कर्त्तव्यासाङ्कर्यसम्पादनद्वारा आर्थिकस्थितिवैषम्यं निय-न्त्रितम् । साधुकर्मप्रवृत्तिर्जनिता जनेषु । तत्रैव लोकानां मिथ्याभिमानस्यापि बीजमुप्तं, यत्समये कटु फलं फलति । जात्यन्तरकर्त्तव्यकरणीयानामापद्यपि कर्त्तव्यतां प्रतिषिध्य जीवनस्य मार्गोऽवसरविशेषे कलुषीकृतः । विरोधभावनायाः प्रकटनेन शान्तेः स्रोतो निरुद्धम् । स्थलविशेषेषु समुन्नतेर्मार्गेऽपि नगायितमिति ।

तदियं जातिव्यवस्था दरिद्राणामेव आदरणीयतां

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

दधाना ह्रासमिवायान्ती यथा न लुप्यते तथा प्रयतनीयम् । पाश्चात्त्यसभ्यताप्रवाहो हि बलादिव पातयितुं प्रयतते ताम् । परमियं वराकी 'भारत'मात्रशरणा यथा न विपद्यते, गुणकर्मविभागाधीनजन्मनोऽस्याः स्वरूपं यथा आपतितान् दोषान् अपास्य चमत्कृतिं प्रपद्यते तथा विदध्यात् परमात्मा ।

### प्रश्नाः

१. 'जाति'पदेन किमवगम्यते ?
२. 'जाति'निर्धारणमूले किं कारणम् अवगम्यते ?
३. अस्याः कति भागाः, कानि तेषां कार्याणि सन्ति ?
४. एतद्विषये गीतायां भगवता किं प्रतिपादितम् ?
५. प्रथेयं पुरा किमर्थम् व्यधीयत ?
६. अस्याः रक्षणाय समाजेन किम् अकृत ?
७. किं परिवर्तनम् जायेत एतद्विषयकसामाजिकदृष्टिकोणे ?
८. जातिव्यवस्थया परिचालितसमाजेन किं कृतम् ?
९. शान्तेः स्रोतः कथं निरुद्धम् ?
१०. कीदृश्यै जातिव्यवस्थायै प्रयतनीयम् ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

## वीरबालको लवः

( नेपथ्ये )

भो भो सैनिकाः, एष खलु कुमारचन्द्रकेतुराज्ञापयति न कश्चिदाश्रमाभ्यर्णभूमयः आक्रमितव्या इति ।

अरुन्धतीजनकौ—अये, मेध्याश्वरक्षाप्रसङ्गादुपागतो वत्सश्चन्द्रकेतुर्द्रष्टव्य इत्यहो सुदिवसः ।

कौसल्या—वत्सलक्ष्मणस्य पुत्रक आज्ञापयतीत्यमृतबिन्दुसुन्दराण्यक्षराणि श्रूयन्ते ।

लवः—आर्य, क एष चन्द्रकेतुर्नाम ।

जनकः—जानासि रामलक्ष्मणौ दाशरथी ?

लवः—एतावेव रामायणकथापुरुषौ ?

जनकः—अथ किम् ।

लवः—तत्कथं न जानामि ?

जनकः—तस्य लक्ष्मणस्यात्मजश्चन्द्रकेतुः ।

लवः—उर्मिलायाः पुत्रस्तर्हि, मैथिलस्य राजर्षेर्दौहित्रः ?

अरुन्धती—( विहस्य ) आविष्कृतं कथाप्रावीण्यं वत्सेन ।

जनकः—( विचिन्त्य ) यदि त्वमीदृशः कथायामभिज्ञः, तद् ब्रूहि तावत् पृच्छामस्तेषां दशरथात्मजानां कियन्ति किंनामधेयानि अपत्यानि केषु दारेषु प्रसूतानि इति ।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

लवः—नायं कथाप्रविभागोऽस्माभिरन्येन वा श्रुतपूर्वः ।

जनकः—न प्रणीत एव कविना ?

लवः—प्रणीतो न प्रकाशितः । तस्यैव कोऽप्येकदेशः सन्दर्भान्तरेण रसवान् अभिनेयार्थः कृतः । तं च स्वहस्तलिखितं मुनिर्भगवान् व्यसृजद् भगवतो भरतस्य मुनेः तौर्यत्रिकसूत्रकारस्य ।

जनकः—किमर्थम् ?

लवः—स किल भगवान् भरतः तमप्सरोभिः प्रयोजयिष्यतीति ।

जनकः—सर्वमिदमाकूतकरम् अस्माकम् ।

लवः—महती पुनस्तस्मिन् भगवतो वाल्मीकेरास्था । यतः केषाञ्चित् अन्तेवासिनां हस्तेन तत्पुस्तकं भरताश्रमं प्रति प्रेषितम् । तेषामनुयात्रिकश्चापपाणिः प्रमादापनोदनार्थम् अस्मद्भ्राता प्रेषितः ।

कौसल्या—जात ! भ्रातापि तेऽस्ति ?

लवः—अस्ति आर्यः कुशो नाम ।

कौसल्या—ज्येष्ठ इति भणितं भवति ?

लवः—एवमेतत् । प्रसवक्रमेण स किल ज्यायान् ।

जनकः—किं यमजावायुष्मन्तौ ?

लवः—अथ किम् ।

जनकः—वत्स कथय, कथाप्रबन्धस्य कियान् पर्यन्तः ?

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

लवः—अलीकपौरवादोद्विग्नेन राज्ञा निर्वासितां देवीं देवयजनसंभवां सीतामासन्नप्रसववेदनाम् एकाकिनीम् अरण्ये लक्ष्मणः परित्यज्य प्रतिनिवृत्त इति ।

कौसल्या—हा वत्से, मुग्धचन्द्रमुखि ! क इदानीं ते शरीर कुसुमस्य झटिति दैवदुर्विलासपरिणाम एकाकिन्या निपतितः ।

जनकः—हा वत्से !

नूनं त्वया परिभवं च वनं च घोरं
तां च व्यथां प्रसवकालकृतामवाप्य ।
क्रव्याद्गणेषु परितः परिवारयत्सु
संत्रस्तया शरणमित्यसकृत् स्मृतोऽस्मि ॥

लवः—( अरुन्धतीं प्रति ) आर्ये कावेतौ ?

अरुन्धती—इयं कौसल्या । अयं च जनकः ।

( लवः सबहुमानखेदकौतुकं पश्यति )

जनकः—अहो निर्दयता दुरात्मनां पौराणाम् ! अहो रामस्य राज्ञः क्षिप्रकारिता !

संभ्रान्ता वटवः—कुमार कुमार ! अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेष्वनुश्रूयते । सोऽयमधुनास्माभिः प्रत्यक्षीकृतः ।

लवः—अश्व इति पशुसमाम्नाये साङ्ग्रामिके च पठ्यते । तद् ब्रूत, कीदृशः ?

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

वटवः—श्रूयताम्—

पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं वाऽऽख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥

( इत्यजिने हस्तयोश्चाकर्षन्ति )

लवः—( सकौतुकापराधविनयम् ) आर्याः, पश्यत पश्यत । एभिर्नीतोऽस्मि ।

( इति त्वरितं परिक्रामति )

अरुन्धतीजनकौ—पूरयतु कौतुकं वत्स !

कौसल्या—अरण्यगर्भरूपालापैर्यूयं तोषिता वयं च । भगवति, जानाम्येतमालोकयन्ती वञ्चितेव । तदन्यतो भूत्वा पश्यामस्तावत् पलायमानं दीर्घायुषम् ।

अरुन्धती—अतिजवेन दूरमतिक्रान्तः सः चपलः । कथं दृश्यते ?

कञ्चुकी—( प्रविश्य ) भगवान् वाल्मीकिराह—ज्ञातव्य-मेतदवसरे भवद्भिरिति ।

जनकः—अतिगंभीरमेतत्किमपि । भगवत्यरुन्धति ! सखि कौसल्ये ! आर्य गृष्टे ! स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः ।

( इति निष्क्रान्तो वृद्धवर्गः )



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

वटव:—( प्रविश्य ) पश्यतु कुमारस्तदाश्चर्यम् ।

लव:—दृष्टमवगतं च । नूनमाश्वमेधिकोऽयमश्वः ।

वटव:—कथं ज्ञायते ?

लव:—ननु मूर्खाः, पठितमेव हि युष्माभिरपि तत्काण्डम् । किं न पश्यथ प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारः । तत्प्रायमेव बलमिदं दृश्यते । यदीह न प्रत्ययः, तद् गत्वा पृच्छत ।

वटव:—भो भोः, किं प्रयोजनोऽयमश्वः परिवृतः पर्यटति ?

[ नेपथ्ये ] योऽयमश्वः पताकेयमथवा वीरघोषणा ।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥

लव:—भो भोः, तत्किमक्षत्रिया पृथिवी यदेवमुद्घोष्यते ?
( नेपथ्ये ) रे रे महाराजं प्रति कुतः क्षत्रियाः ।

लव:—धिग् जाल्मान् !

यदि ते सन्ति सन्त्येव केयमद्य विभीषिका ।
किमुक्तैरेभिरधुना तां पताकां हरामि वः ॥

भो भो वटवः ! परिवृत्य लोष्टैरभिघ्नन्तो नयतैनमश्वम् । एष रोहितानां मध्ये वराकश्चरतु ।

पुरुष:—( प्रविश्य ) ( सक्रोधदर्पः ) धिक् चापलम् ! किमुक्तवानसि ? तीक्ष्णतरा ह्यायुधश्रेणयः शिशोरपि दृप्तां वाचं न सहन्ते । तदनेन तरुगहनेनापसर्पत ।

वटव:—कुमार ! कृतमनेनाश्वेन । तर्जयन्ति विस्फुरित-

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

शस्त्राः कुमारमायुधीयश्रेणयः। दूरे चाश्रमपदमितः। तदेहि हरिणप्लुतैः पलायामहे।

लवः—( विहस्य ) किं नाम विस्फुरन्ति शस्त्राणि ? ( इति धनुरारोपयन् )

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्भूरिघोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बि विकटोदरमस्तु चापम् ॥

( इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे )

## प्रश्न

१. चन्द्रकेतुः किम् आज्ञापयति स्म ?
२. कुशः क्व किमर्थं च प्रेषितः आसीत् ?
३. लवः कथाप्रबन्धम् कथम् उपस्थापितवान् ?
४. बटवः अश्वरूपं कया रीत्या वर्णयन्ति स्म ?
५. लवस्य गमनानन्तरं कौसल्या किं किम् उक्तवती ?
६. परावृत्य कञ्चुकी किम् आह ?
७. लवः अश्वमेधाश्वं कथं परिचिनोति स्म ?
८. लवः बटून् किमादिदेश ?
९. धनुरारोपयन् लवः किम् उक्तवान् ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

## भारतीयसंस्कृतौ स्त्रीणां स्थानम्

चिरकालिकराजनीतिकपारवश्यतमिस्रातमोऽपहतदृष्टयो भारतीया मूढा इव परप्रत्ययनेयबुद्धयः प्रायेण भारतीय-संस्कृतेः सर्वं स्वरूपम् अन्यथाकारं मन्यन्ते ।

भारतीयसंस्कृतौ स्त्रीजातेः किं स्थानमित्यस्मिन् विषयेऽपि तथैव बहूनां मिथ्याप्रत्ययो विद्यते । स्त्रीजाते-र्नैव विशेषतः संमाननीयं स्थानमासीद् भारते इत्येव तेषां विचारः ।

नूनमेतद् भारतीयसंस्कृतेरपरिज्ञानमूलकमित्येवानुपदं प्रदर्श्यते ।

भारतीयसंस्कृतिमनुशीलयतां शेमुषीमतां नाविदित-मेतत् यत् भारतीयसभ्यतायाः प्रारम्भकालादेव साम्प्रतं यावत्, न केवलम् ऐतिहासिकदृष्ट्यैव, न केवलं शास्त्रीय-दृष्ट्यैव, किन्तु व्यवहारदृष्ट्यापि सर्वदैव भारते स्त्रीजाति-र्विशिष्टस्य संमानस्य गौरवस्य च पात्रमासीत् वर्तते चेति ।

ऐतिहासिकदृष्ट्या तावत्—वैदिकेषु ऋषिषु घोषा-विश्ववारा-लोपामुद्राप्रभृतीनाम् ऋषिकाणाम्, उपनिषत्सु गार्गीप्रभृतीनां ब्रह्मवादिनीनां, महाभाष्यादिग्रन्थेषु च 'काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी । काशकृत्स्नीम्

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

अधीते काशकृत्स्ना ब्राह्मणी' ( महाभाष्य ४।१।१४ ), 'उदमेघस्यापत्यं गोत्रं स्त्री औदमेघी। औदमेघ्याश्छात्राः औदमेघाः' ( महाभाष्य ४।१।७८ ), 'या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः, उपाध्यायी, उपाध्याया।' 'आचार्या स्वयं व्याख्यात्री' ( सिद्धान्तकौमुदी ) इत्यादिप्रमाणानामुपलब्ध्या स्पष्टमत्युच्चमासनमुद्घोष्यते प्राचीनभारते स्त्रीजातेः।

शास्त्रीयदृष्ट्यापि—'जायेदस्तम्' ( =जाया वै गृहमित्यर्थः, ऋग्० ३।५३।४ ), 'गृहिणी गृहमुच्यते', 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः', 'मातृमान् पितृमान् आचार्यवान् पुरुषो वेद' ( शतपथ ब्रा० ), 'पितुर्दशगुणा माता गौरवेणातिरिच्यते' इत्यादीनि प्रमाणानि तामेव कथां कथयन्ति।

किञ्च द्वन्द्वे पूर्वनिपातप्रकरणे 'अभ्यर्हितं च पूर्वं निपततीति वक्तव्यम्' इति वार्त्तिकस्य 'मातापितरौ' ( महाभाष्य २।२।३४ ) इत्याद्युदाहरणेनापि पुरुषस्याप्यपेक्षया स्त्रिया विशिष्टगौरवास्पदत्वं प्रतीयते। अत एव न केवलं संस्कृतभाषायामेव किन्तु लोकभाषास्वपि 'राधाकृष्ण', 'सीताराम', 'गौरीशंकर', 'पार्वतीपरमेश्वर', इत्यादिसमस्तशब्देषु दृश्यनाम्नः स्त्रीनाम्नः पूर्वनिपात उक्तमेवार्थं समर्थयति।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

अत्रैतदपि विभावनीयम् । वैदिकदेवतासु इन्द्रादिभिः सहेन्द्राणीप्रभृतिदेवपत्नीनां सद्भावः, सर्वदेवसाधारणस्यापि 'देवता'शब्दस्य स्त्रीलिङ्गता, प्राकृतिकजगतस्तस्य तस्य विभागस्य अधिष्ठातृशक्तेः 'अधिष्ठातृदेवता' इति स्त्रीत्व-विशिष्टाधिष्ठातृदेवतारूपेणावगतिः । अन्ततः जगदात्म-शक्तेर्निःशेषदेवगणशक्तिसमूहमूर्त्तेः स्थितिसंहारकारिण्याः विश्वेश्वर्याः महाशक्तेरपि 'देवी'रूपेण विभावना च— सर्वमेतत् भारतीयसंस्कृतौ स्त्रीजातेरनन्यसाधारणीं संमान-भावनाम् एव ख्यापयति ।

व्यवहारदृष्ट्यापि, भारतीयसंस्कृतौ मातृशक्तेर्विशेषतः संमानः स्वाभाविक एवेति स्पष्टतः प्रतीयते । 'मातृवत् परदारेषु' इति नीतिकृद्भिरभ्युपगतः सिद्धान्तो व्यवहारेऽपि परस्त्रीषु परदारिकासु च मातः ! भगिनि ! पुत्रि ! इत्यादि-शब्दान् प्रयुञ्जानैः पामरैरपि जनैर्भारते वस्तुतः परिपा-ल्यते । किं बहुना, विशेषतो भगवत्याः सीताया देव्या द्रौपद्याश्चापमानपरिमार्जनार्थं प्रवृत्तयोः रामायण-महाभारत-योर्निर्माणमपि उपर्युक्तसिद्धान्तनिदर्शनार्थमेव जातमिति मन्ये ( काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्— वाल्मीकि १।४।७ ) ।

अद्यत्वेऽपि पन्ना-हाडा-लक्ष्मीबाई-दुर्गावती-विजया-लक्ष्मी-श्रीमतीभण्डारनायकप्रभृतयः महिलालंकारभूताः सर्वजनसम्मानमासादयन्ति ।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

अत्र प्रसङ्गेऽधस्तना महाभारतीयाः श्लोकाः विभावनीयाः—

'अर्धं भार्या मनुष्यस्य, भार्या श्रेष्ठतमः सखा ।
भार्या मूलं त्रिवर्गस्य, भार्या मूलं तरिष्यतः ॥




भार्यावन्तः क्रियावन्तः, सभार्या गृहमेधिनः ।
भार्यावन्तः प्रमोदन्ते, भार्यावन्तः श्रियान्विताः ॥

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

सखायः प्रविविक्तेषु, भवन्त्येताः प्रियंवदाः ।
पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ॥'

[ महाभारत १।७४।४१-४३ ]

किञ्च—'दह्यमाना मनोदुःखैर्व्याधिभिश्चातुरा नराः ।
ह्लादन्ते स्वेषु दारेषु घर्मार्त्ताः सलिलेष्विव ॥'

[ महाभारत १।७४।५० ]

ततश्च स्त्रीजातेः सम्मानभावना भारतीयसंस्कृतेः परमं वैशिष्ट्यमित्येव मन्तव्यमिति शम् ।

**प्रश्नाः**

१. स्त्रीजातिः कस्य पात्रमासीत् पुरा ?
२. ऐतिहासिक-शास्त्रीयदृष्ट्या स्त्रीजातेः किं महत्त्वमस्ति ?
३. पूर्वनिपातेन नाम्नि किम् अवगम्यते ?
४. देवीरूपेण विभावना किं ख्यापयति ?
५. व्यवहारदृष्ट्या मातृशक्तेः सम्मानः कथं प्रतीयते ?
६. स्त्रीजातीनां काः सम्मानमासादयन्ति ?
७. महाभारतीय-श्लोकेन किं विभाव्यते ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

## हिन्दी-विजयः

हिन्दी—अम्ब ! सुरभारति ! सत्यमद्य मे पुनर्जन्म । धन्यासि भवती । धन्यस्ते महिमा । धन्यो विधिः यज्जीवन-संज्ञाशून्यप्रायेऽत्रार्यावर्ते पुनरपि विविध-विद्या-वाटिकासु दृश्यते विचित्रभावाङ्कुराणामुद्भेदकरं सुप्रभातम् ।

सुरभारती—पुत्रकि ! भारतभागधेये ! सुचिरेणाद्य भगवता वेदपुरुषेणानुगृहीतास्मि । मया तु दुर्यवन-राज्यसमयादेव स्वावमानं दृष्ट्वा, निजभाग्यस्याव-सानञ्चाकलय्य, इतो गत्वा सुरलोक एव सशोक-मुषितं, परित्यक्तञ्च भारतीयानां प्रेम । परमिदानीं भारतबालानाम् 'अम्ब ! आयाहि-आयाहि, पाहि-पाहि, पायय-पायय चास्मानमृतसोदर्यं स्तन्यम्' इत्यार्तनादं श्रुत्वा, पुत्रवात्सल्येन भृशद्रवितमानसात्र समा-गतास्मि ।

हिन्दी—आम् धन्यं भवत्याः वात्सल्यम् ।

सुरभारती—( सहर्षम् ) हन्त भोः ! दृश्यते किमपि विलक्षणं परिवर्तनं भारते । अपि च—

उत्साहः सर्वकार्येष्वहमहमिकया देशसेवानुरागः
शास्त्राणां स्वात्मवादो ह्यभिरुचिरुचिरश्चानुरम्भः कलानाम् ।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

श्रद्धाभावाभिवृद्धो नियतिनयविदामादरः पूर्वजानां
दीने सद्भ्रातृभावो निवलसमुदये वीरदीक्षा-प्रचारः ॥१॥

अहो प्रीतास्मि संवृत्ता। प्रफुल्लितं मेऽन्तःकरणम्। ( शयानं भारतं प्रति ) वत्स! भारत! उत्तिष्ठ! उत्तिष्ठ! विषादं मा गाः। त्वामधुनैव भारतीयाः स्वपुरुषकारेण अवश्यमुद्धरिष्यन्ति। एषा आयातीव मे सम्पत्। भविता च ते समुन्नतिः। ( श्रुत्वा ) किं किं कस्यचिदार्त्तनादः श्रूयते ( हिन्दीं प्रति ) वत्से शृणोषि ?

हिन्दी—अम्ब! न जाने कस्यायं रोदनशब्दः। परं यस्य कस्यापि भवतु, गच्छामि गवेषणायै पृच्छामि च तत्कारणम्। ( इति गन्तुं व्यवस्यति )

(ततः प्रविशति प्रान्तीयभाषाभिः निगडबद्धा अंग्रेजी)

आंग्लभाषा—त्राहि, त्राहि, रक्ष रक्ष, नास्ति मे शरणम्। किं करोमि ? क्व गच्छामि! एताभिः दृढं निगडबद्धाऽहं स्वेच्छया विचरितुं न शक्नोमि। हा दैव दुर्विध! नष्टं मे स्वातन्त्र्यम्। नयनविहीन-स्येव न किमपि मे भाति। यवनसमयान्मे निरर्गल-मासीत् राज्यम्। तन्मध्ये एव सहसा भग्नम्। ( इति बहुलं विलपति )

हिन्दी—का त्वम् ? किंनिमित्तं रोदिषि ? किं कष्टं वर्त्तते ?

अंग्रेजी—अहमस्मि, हतभागधेया, अहमस्मि। (पुनर्विलपति)

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

हिन्दी—वद वद स्वदुःखस्य, रोदनस्य कारणम्। विश्रब्धं कथय स्वकीयोदन्तजातम्। काऽस्ति भवती?

अंग्रेजी—यस्याः भारतभाग्यमपि पलायितं साऽहं सकलचराचरविदिता अंग्रेज़ी अस्मि। अद्य दौर्भाग्यादेव एतासां महाधूर्त्ताणां हस्ते पतिताऽस्मि। अत एव विलपामि।

हिन्दी—( सभ्रूविक्षेपम् ) किं धूर्ते, तिष्ठ! त्वमेवासि भारतदैन्यस्य निदानम्, दुर्विदग्धतायाः कारणम्। तिष्ठ! करोमि ते चिकित्साम्। (सुरभारतीमवलोक्य) एषा चिराय अद्य मे भुजपञ्जरे पतिता, तत्करोम्यस्याः यथोचितम्। ( इति करेण दृढं गृह्णाति) वद रे वद! किन्ते करोमि? (दृष्ट्वा) अहो! एषा तु स्वातन्त्र्योषःप्रकाशे अन्धा जाता। न जाने सूर्योदये काऽस्य गतिर्भविता। तन्मुञ्चामि। परं, नहि। दुष्टस्य वधोऽवधः। ताडनमेव हितम्। ( इति ताडयितुमिच्छति )

अंग्रेजी—का भवती? मा मां मारय, दयनीयाहमस्मि, यतः स्वातन्त्र्योषःकालस्यालोकेन नितरां कम्पते मे हृदयम्। नयने च क्षीणक्षीणे। अधुना तु मृतप्रायाऽस्मि संवृत्ता। एताभिश्च दुष्टाभिरहं निगडे पातिता। तत्प्रणताऽस्मि शरणाय। प्रार्थये चाभयम्।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

हिन्दी—(सुरभारतीमुद्दिश्य) अस्ति कृपापात्रं यदेषाऽन्धा। अन्धस्य वधाय नास्ति शास्त्रानुज्ञा। न चायं ममात्मा प्रभवति। (अंग्रेजीं प्रति) तन्मुञ्चामि। गच्छ, मूर्खे गच्छ स्वदेशम्।

सुरभारती—पुत्रि! भारतभागधेये! प्रीतास्मि तवात्मनः औदार्येण, धर्मपरायणतया च।

अंग्रेजी—भगवति! भवत्सङ्गममात्रेणैव मे चेतसि प्रकाशो जातः, तत्क्षमताम् माम्। प्रसीदतु मयि, परमानुकम्पया उपदिशतु च मां स्वपरिचयं, मम कर्तव्यतां च।

हिन्दी—आः, ते भाषणेनैव ज्ञायते यदीश्वरस्त्वयि प्रसन्नो जातः। तच्छृणु, भारत-राष्ट्रभाषा, इति जनाः मे नाम कथयन्ति। सम्प्रति त्वामुपदिशामि, यत् इतो भारतात् स्वकुटुम्बिनीभिः कुटिलता-जडता-दुर्जनतादिभिः सह गत्वा स्वदुराचारस्य पश्चात्तापं कुरु, येन ते भविष्यमुज्ज्वलं विशुद्धश्च भवेत्।

अंग्रेजी—क्षम्यतां भगवति ममापराधः, दुर्विनीतया मया अखर्वगर्ववशादनेकदुराचारैर्भवतीनामन्तःकरणमतीव क्लेशितम्। (इति पादयोः पतति)

हिन्दी—सर्वं मया विस्मृतम्। त्वं गच्छ, धर्मपरा भूत्वा दिवसान् यापय।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

अंग्रेजी—यथोपदिशति भवती। ( इति निष्क्रान्ता )

सुरभारती—( प्रान्तीयभाषाः प्रति ) पुत्र्यः! यूयम् भारतं निबोधयत। तस्य साहाय्यं कुरुत। अद्य तस्य पुनस्तिलकोत्सवाय उपकरणानि आनयत।

सर्वा—यथाज्ञापयति भवती। ( इति निष्क्रान्ताः ) (ततः प्रविशति भारतवर्षं, सोपकरणाः प्रान्तीयभाषाश्च। )

भारतवर्षम्—( सुरभारत्याः पादयोः प्रणिपत्य ) अम्ब! चिरादनुगृहीतोऽस्मि।

सुरभारती—अये! सुतरां प्रसन्नास्मि। तव चेच्छामि पुना। राजतिलकं स्वहस्तेन कर्तुम्।

भारतवर्षम्—यथाभिमतं भवत्याः।

सुरभारती—( स्वहस्तेन भारतभाले तिलकं विधाय ) वत्स! सम्प्रति कृतयुगसमयवदद्यापि प्रजानुरञ्जनं विधेहि, हिन्दी च स्वेच्छया विहरतु। प्रान्तीय-भाषाः च चिरं विजृम्भेयुः।

सर्वे—यथादिशति भवती।

सुरभारती—किं ते भूयः प्रियमुपकरोमि?

भारतवर्षम्—अतः परमपि किम् प्रियमस्ति! तथापीद-मस्तु—

प्रजा हृष्टा पुष्टा किमुत शरदां नन्दतु शतं
प्रवर्त्तन्तां विश्वे प्रकृतिसुहिताय क्षितिभुजः।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

नृणां भक्तिर्भूयाद्भगवति भवे द्वैतगलिता
ममान्तस्तापं ते शमयतु च मन्दस्मितमदः ॥ ७ ॥

( इति निष्क्रान्ताः सर्वे )

प्रश्नाः

१. हिन्दी कथमत्र सुप्रभातम् अपश्यत ?

२. सुरभारती कथमत्र पुनरागतवती ?

३. सुरभारती कथं प्रीता संवृत्ता ? किं च भारतम् अकथयत् ?

४. हिन्द्याम् कृतप्रश्नायाम् , अंग्रेजी किम् उदतरत् ?

५. भारतदैन्यस्य किं कारणम् आसीत् ?

६. हिन्दीं जनाः किं कथयन्ति ?

७. सुरभारती प्रान्तीयभाषाः किं कथयति स्म ?

८. सुरभारती काभिराशीर्भिः भारतस्याभिषेकं करोति ?

९. भारतस्य भरतवाक्यं श्रावयत ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

## प्रगतिवादः रूढिवादश्च

कस्यापि मनुष्यस्य समाजस्य वा सर्वाङ्गीणायाः समुन्नतेः पूर्णविकासस्य चात्यन्तं बाधिका प्रवृत्तिस्तस्य रूढिवाद एव। तस्य रूढिवादस्योत्पत्तेः पुष्टेश्च कारणानि तान्येव, येभ्यः खलु निराशावादस्य प्रवृत्तिर्जायते। अवरुद्धोन्नतिविकासमार्गो हि जनः समाजो वा स्वभावत एव नैराश्यवादेन आत्मन्यविश्वासेन च ग्रस्तो जायते। पादमात्रप्रचलन एव कदाचिन्मम गर्ते कूपे वा पतनं संभवतीति भयाद्भीतोऽन्ध इव स स्वस्थान एव स्थितिं वरं मन्यमानः पदात्पदमपि प्रगतिं नैव करोति, रूढि-वादस्य ग्राहेण वा ग्रस्तो जायते।

तद्विपरीतम्, यस्य जनस्य समाजस्य वा समक्ष-मुन्नतेर्मार्गा अनवरुद्धाः प्रशस्ताश्च भवन्ति; आशावादस्य च प्रकाशो विद्यते; अत एव च यः आत्मविश्वासेन समुपेतः, नूनं स्वभावत एव स प्रगतिशीलो दृश्यते। कोऽपि चक्षु-ष्मान् प्रकाशस्य विद्यमानतायामात्मविश्वासेनैव कुत्रापि स्वेच्छया गन्तुमर्हति।

अत एव यथैव प्रगतिवादः प्रकाशस्य आशामयस्य विश्वासमयस्य च जीवनस्य लक्षणम्, तथैव खलु रूढि-

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

वादोऽन्धकारस्य नैराश्योपेतस्य आत्मविश्वासरहितस्य च जीवनस्य प्रतीकम् । शब्दान्तरेषु—यथैव खलु रूढिवादः पृथ्व्याः उदरे शिलीभूतानां वृक्षादीनामिव निश्चेष्टायाः जीवनरहितायाश्च स्थितेः प्रख्यापकः, तथैव प्रगतिवादः जीवनक्रियया सम्पन्नस्य सचेष्टस्य च प्राणिनः स्थितेः परिचायकः ।

अयमेव रूढिवादः भारतीयसमाजस्यात्यन्तं महती समस्या । पादयोर्बद्धं निगडमिव, एष एव समाजस्य नानारूपैः प्रगतिमवरुणद्धि । एतस्य हि दुष्प्रभावः नितरां सूक्ष्मेणादृश्येन च प्रकारेण, भयानकाः राजयक्ष्मकीटाणवः शरीर इव, अस्माकं समाजे प्रविष्टस्तं जीर्णं शीर्णं च विधातुं सद्यस्तत्परो विद्यते ।

अस्य खलु प्रवृत्तिर्जीवनस्य विभिन्नक्षेत्रेषु दृश्यते । तथाहि—शब्दानामर्थविषये तावदयमेव रूढिवादस्तेषा-मन्तस्तलप्रवेशेऽस्माकं बाधकः, प्रायेण च मानसिकस्य पाषण्डस्य च्छद्मनश्च पोषको जायते । अयमेव मनुष्याणां हीनस्वार्थैर्निम्नप्रवृत्तिभिश्च प्रेरितानां कार्याणां वास्तविकं स्वरूपमाच्छाद्य जनतायाः प्रतारणायै आवरणायते । भक्तिः, तपः, दानम् , दया, यज्ञः, स्वर्गः, सन्तोषः, श्रद्धा इत्यादिशब्दानां प्रयोगविषयकः योऽयं लोके विप्लवस्तस्य मूलकारणमेष शब्दगतो रूढिवाद एव ।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

भगवद्गीतायां यज्ञ-तपो-दानादिविषये यत्खलु सात्त्विक-राजस-तामसभेदप्रदर्शनं तदपि अस्यैव रूढिवादस्य निराकरणाय प्रयत्नः ।

प्रायेण जनैरनवगतमहत्त्वायाः श्रीस्वामिदयानन्दाचार्यैर्निर्मितायाः यज्ञ-स्वर्ग-नरक-तीर्थादिशब्दार्थनिरूपणप्रवृत्ताया 'आर्योद्देश्यरत्नमालायाः' अपि वस्तुतोऽस्यैव शब्दगतरूढिवादस्य निरास एव प्रयोजनम् ।

पूर्वोक्तस्य रूढिवादमूलकस्य मानसिकपाषण्डस्य च्छद्मनो वा कारणादेव उद्भटा अपि विद्वांसः, भारतीयेतिहासस्य विभिन्नकालेषु, प्राचीनग्रन्थान् स्वसिद्धान्तानुकूल्येनैव व्याख्यातुं सप्रयत्ना दृश्यन्ते। नूनमद्यत्वेऽपि विद्यते एव सा प्रवृत्तिरस्मद्देशे । एतदेव कारणं यद्देशेऽस्मिन् विभिन्नकालेषु समाजस्य परिष्कार- ( = सुधार ) प्रगत्योरुद्देश्येन महापुरुषैः प्रचालितानि आन्दोलनानि संप्रदायाश्च स्वप्रधानलक्ष्याच्च्युतानि रूढिवादस्य कच्छे पतितानि विनाशमगच्छन् । नैतत्तिरोहितं प्राचीनस्य सामयिकस्य वा इतिहासस्य विशेषविदाम् ।

रूढिवादिनामेष स्वभावो यत्ते, परोपजीविनो वृक्षा वृक्षान्तराणीव, प्रगतिशीलानि आन्दोलनानि कथमपि आत्मसात्कृत्वा निष्प्राणतां निःसत्त्वतां चापादयन्ति । एतदर्थं च ते समाजे समादृतानां शब्दानां भावनानां च



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

रूपेण परम्परया समागतानां रूढीनामेवोपयोगं पूर्णत्वेन अदृश्यविधयैव विदधति ।

रूढिवादस्य पूर्वोक्ताभ्योऽदृश्याभ्यो घातकप्रवृत्तिभ्यः आत्मनः समाजस्य च रक्षणार्थम् ऐकान्तिकसत्यनिष्ठायाः आत्मपरीक्षणस्य अमूढबुद्धेश्च सततं प्रयोगस्य महत्यावश्यकता । मनस्यन्यत्क्रियायां चान्यदित्येतद्द्वयं येषामस्ति त एव वञ्चका 'द्वयाविनः' (=द्वयवादी) इत्येवं वेदे गर्हणीयत्वेन प्रोक्ताः ।

आत्मपरीक्षणं हि नाम मनुष्यस्य प्रथमं समुन्नतेर्मूलम् । ऐकान्तिकी शब्दप्रमाणपरता वा, परम्परागता 'अन्धेनैव नीयमाना यथान्धाः' इत्येवंरूपा अन्धभक्तिरेव वा रूढिवादः । अत एव स सर्वतः प्रथमं बुद्धेर्जडतायाः लक्षणम् । तद्वैपरीत्येन वेदेष्वसकृत् प्रगतिवादस्यैव गुणगानं क्रियते । स च जीवनस्य मुख्यं लक्षणम् ।

अतीतस्यैव चिराय गीतगानपरा वयमभूम । समयोऽयं भविष्यस्य गीतानां गानस्य । वास्तविकदृष्ट्या आदर्शो भविष्ये एव तिष्ठति, नैवातीते । संभवति यदतीतस्य गीतगानेनास्माकं जीवनस्य मन्दायां गतौ किमपि परिवर्तनं न भवेत् । परं भविष्यस्य गीतगानमस्मदीयं जीवनम् स्फूर्तिम' विधास्यतीति नात्र सन्देहः । 'परिमितं

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

वै भूतम्,···अपरिमितं भव्यम्' ( ऐ. ब्रा. ४।६ ) ( भव्यं भविष्यमित्यर्थः ) कथनमेतत्सुतरां सत्यमेव ।

वस्तुतस्तु अतीतस्य महत्त्वं तावदेव, यावत्तदस्माकं भविष्यस्य निर्माणे साहाय्यकृत्। श्रेयःप्रेयोमार्गयोः रहस्यमस्मिन्नेव सिद्धान्ते निहितम्। यथा प्रेयोमार्गस्य सम्बन्धोऽस्माकं जीवनस्यातीतकालसंबन्धिनीभिर्भावनाभिर्भवति, तथैव श्रेयोमार्गस्य संबन्धः आदर्शैः सह विद्यते । वास्तविकोन्नतेः रहस्यं तूभयोरपि समन्वये सामञ्जस्ये च तिष्ठति ।

**प्रश्नाः**

१. कः सामाजिक-विकासस्य बाधकः ?

२. कीदृशः जनः नैराश्यवादेन ग्रस्तो जायते ?

३. कः प्रगतिशीलो दृश्यते ?

४. प्रगतिवादः रूढिवादो वा कस्य कस्य प्रतीकम् अस्ति ?

५. रूढिवादस्य प्रवृत्तिः कुत्र कुत्र केन केन रूपेण च दृश्यते ?

६. समाजसुधारकसम्प्रदायाः कथं विनाशमगच्छन् ?

७. रूढिवादिनां कः स्वभावः ? ते किं विदधति ?

८. रूढिवादस्य प्रवृत्तिभ्यो रक्षणार्थम् कस्य प्रयोगस्य आवश्यकता वर्तते ?

९. के वञ्चकाः ?

१०. जीवनस्य किं लक्षणम् ?

११. भविष्यस्य गीतगानम् किं विधास्यति ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

## व्यायामः

'शरीरमाद्यं खलु धर्मसाधनम्' इति सूक्त्या शरीरस्य महत्त्वं मुक्तकण्ठेनाङ्गीकृतं कविकुलगुरुणा कालिदासेन। धर्मार्थकाममोक्षरूपस्य पुरुषार्थचतुष्टस्य सिद्धेर्निमित्तं शरीरं खलु। स्वस्थं शरीरं हि अध्यवसायं कर्तुं प्रभवति। अस्वस्थं शरीरं तु स्वस्य लालनं पालनञ्च कर्तुमपि न क्षमं खलु। का कथाऽध्यवसायस्य ? शरीरस्य नीरोगताया अनेकानि साधनानि सन्ति। तेषु व्यायामस्यापि महत्त्वपूर्णं स्थानमास्ते।

येन कर्मणानुष्ठितेन मनुष्यस्य तनोः, तद्द्वारा बुद्धेश्च उचितौ संस्कारोच्छ्रायौ भवतः, येन शरीरस्य सन्धिस्थलानि चलन्ति, धमन्यः स्पन्दन्ते, रक्तं परिष्क्रियते, पाकक्रिया व्यवस्थाप्यते, सम्भवतां रोगाणाम् आक्रमणं प्रतिबद्ध्यते च तत्कर्म व्यायामः। मनुष्याणां शरीरेण समं बुद्धेरतिघनिष्ठः सम्बन्धो वर्तते। शिक्षा यथा मनुष्याणां ज्ञानं परिमार्जयति, तथैव व्यायामस्तनुं समेधयति। एवं च मनुष्याणामिदं कर्तव्यं वर्तते यत्ते यथारुचि कमपि व्यायाममुपसेवेरन्। एष हि विदुषां समुदाहारः—'स्वस्थे शरीरे स्वस्था मतिरवतिष्ठते' ( Sound mind in sound body )।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

किन्तु एष हि अतीवखेदविषयः यत् अस्माकं देशस्य युवानोऽत्र विषये बलवदुदासते । ते करे करमादाय वृथाऽवस्थानं सौख्यम् अकर्मण्यतां च धनिकतां मन्यमानाः जीवनं व्यर्थतां नेतुम् अभ्यस्यन्ति । कतिपये विद्यार्थिनः स्वतनोरवस्थां अपसृत्य अध्ययने श्राम्यन्ति, गुरूणां गौरवं वर्धयन्ति, परीक्षास्वपि महत्या प्रतिष्ठयोत्तरन्ति । किन्तु पश्चात्, आगनादृतेन स्वास्थ्येन प्रतिशोधबुद्धयेव हीयमानास्तेऽकाल एव कालकवलिताः सन्तः समाजस्य देशस्य परिवारस्य स्वस्यैव वा कामपि सेवां कर्तुं न पारयन्ति । यदि त एव कियन्तमेव कालं प्रत्यहं व्यायामे समर्पितवन्तोऽभविष्यन्नूनं तैः स्वेनैव सह समाजस्य, जातेर्देशस्य च महती सेवा कृताऽभविष्यत् । यूरोपदेशवासिनो व्यायामे साधु ध्यानं ददते । ते कदापि व्यायामार्थं निर्धारिते समये कार्यान्तरं नानुतिष्ठन्ति । न केवलं यौवनं, किन्तु वार्द्धक्यम्—यत्र जनाः साधारणतः शरीरविषये ध्यानदानमनावश्यकं प्रतियन्ति, अपि नियतव्यायामविधानेन रमणीयतां प्रापयन्ति व्यायामस्य प्रभावेण च ते कदापि कष्टमयं जीवनं न यापयन्ति । अस्माकं देशे लब्धजन्मानस्तु जनाः कदापि व्यायामे मनो नार्पयन्ति । तेन यौवनं यावत् परमात्मना प्रदत्तां वर्द्धिष्णुतां सहायिकामासाद्य कथञ्चिच्चलन्ति । पश्चात्स्पृष्टमात्रे जरसा देहे कथञ्चित् दिने

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

एकदा निगीर्णामपि तण्डुलमुष्टिं जरयितुं न क्षमसाणाय जाठराय वह्नये कुशाच्यशतं पुनरावर्त्तयन्तः भारभूतं जीवनं यापयन्ति। व्यायामस्य अनादरेण जीवनस्य तान्यहानि दुर्गमाणि कष्टमयानि च जायन्ते, येषु तथाकर्तॄणां कायिकी स्थितिर्विपद्यते।

व्यायामश्च द्विविधो भवति—पौरस्त्यः पाश्चात्यश्च। केचन व्यायामस्य पाश्चात्यपद्धतिं श्लाघन्ते, केचन पौरस्त्यपद्धतिम्। वस्तुतः अस्माकं कृते भारतीय-पद्धतिरेव श्लाघ्या। धावनं, भ्रमणं, तरणञ्च सर्वोत्कृष्टो व्यायामः खलु। अश्वारोहणं गुणवत्तरं व्यायामं ब्रुवते विद्वांसः। एतेन हि स्वनुष्ठितेन श्रमजयात्तनुः प्रगुणा भवति, रक्तसञ्चारेण कान्तिः प्राखर्यमायाति। परमिदं बहु व्ययसमर्थैरेव धनिकैरनुष्ठातुं शक्यम्। जले सन्तरणमपि समधिकगुणो व्यायामः। एतेनापि श्रमजयः, सततसञ्चलनवशात् स्फूर्तिः, सन्धिस्थलेषु च चालनजन्मा बलवद्भावः, कान्तिप्रकर्षश्च समुद्भवन्ति। परमिममपि व्यायामं सर्वत्र सर्वास्ववस्थासु न सम्भविनं मन्यामहे। नहि सर्वत्रावगाहक्षमजलपूर्णाः जलाशयाः न वा तनोरस्वास्थ्ये प्लवनं हिताय ब्रूमहे। न वा सर्वत्र जले तरणं युज्यते, तरङ्गि हि जलं तदर्थं शस्यते। भ्रमणं नूनं सर्वोत्तमो व्यायामः। परं नगराद्बहिः प्रकृत्याः क्रोडे एव भ्रमणं हितकरं भवति।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

विद्यार्थिनस्तु क्रीडाक्षेत्रे मनोविनोदेन सार्धं व्यायामञ्च कर्तुं पारयन्ति । धावनमपि तेषां कृते हितकरमस्ति। साम्प्रतिके वायुमण्डले पदा कन्दुकक्रीडनमपि व्यायामं साधुफलं समयोपयुक्तं च मन्यन्ते लोकाः। अतिमात्रो यदि न भवति, युज्यतेऽयं शरीरस्वास्थ्यसौन्दर्यसाधनाय व्यायामः। परमयं व्यायामो मात्रामुत्सृज्य कृतः छात्राणां स्वास्थ्यं चुलुकयतीत्यपि चिन्त्यम्। तेनास्य व्यायामस्य मात्राया नियन्त्रणे सततं जागरूकताऽपेक्षिता। किञ्चायं व्यायामो नैकेन कर्तुं शक्यते, सहायसापेक्षतया प्रयोगस्य प्रचलितत्वात्। न च वृद्धानामत्र मनो रमते। न वा सर्वत्र तदुचितचत्वरोपलब्धिरपि सम्भवतीति प्रागुदीरितेषु सर्वेषु व्यायामेषु दृष्टिं निक्षिपन्तः 'भ्रमणं' सर्वस्यां स्थितौ, सर्वेषु स्थानेषु, सर्वत्र च समये विधातुं शक्यम्, इदम् मनोहरं नानाविधदृश्यदर्शनजनितनयनप्रसादं समस्तायाः शरीरयष्टेश्चालनं व्यायाममभिनन्दयामः। प्रचलितमपि प्रायः सर्वेषु स्थानेषु वर्गेषु चेदमधिकपरिमाणेन। अत्र चात्यनुष्ठिते न कापि हानिरस्तीति सर्वोत्तमोऽयं प्रकारः प्रतिदिनमेका होराऽत्र नियुज्यमाना सर्वं व्यवस्थितं विधत्ते।

शरीरस्यारोगितायै विकासाय च व्यायामः प्रतिदिनं नियमतः यथाविधि च कर्तव्यः। यथाशक्ति यथाविधि च

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

व्यायामं कुर्वन्नरो नावसीदति। बलादधिको व्यायामः शरीरस्य वीर्यं नाशयति। समयनिष्ठामाश्रित्य कृतो व्यायामोऽधिकं हितं करोति। अतः व्यायामः नियमतः यथाशक्ति च विधेयः।

जीवधारी स्वभावेनैव व्यायामप्रियः खलु। एतेनैव शिशोरङ्गानि विकसन्ति। क्रीडायां यादृशी रतिर्बालकानां नहि तादृशी अन्यकार्येषु। वस्तुतः प्रकृतिप्रदत्तानामङ्गानां सुचारु चालनं हि व्यायामः। अतः सर्वथा स्वास्थ्यं कामयमानैः स्वस्थ एव देहे स्वस्थस्य बुद्धिसन्तानस्य वासे विश्वसद्भिः 'धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्। तन्निघ्नता किं न हतं रक्षता किं न रक्षितम्' इति च स्मरद्भिः सदा सेवनीयो व्यायामः।

इतिहासोऽप्यस्य साक्षी यत् सर्वे वीरेश्वराः व्यायामप्रियाः आसन्। भीमार्जुनप्रतापशिवराजप्रभृतयः निदर्शनानि सन्ति। महर्षिः दयानन्दः व्यायामेनातुलं बलमुपलभ्य विस्मापकान् कार्यान् अकरोत्। कृशगात्रोऽपि 'मंगला रायः' व्यायामप्रसादेनेदृशः पुष्टगात्रो बलवत्तरश्चाभवत् यत्तस्यातिमर्त्यश्चमत्कारं स्मारं स्मारं देशे विदेशे च जनाः मुक्तकण्ठेन व्यायामस्य महत्त्वमुररीकुर्वन्ति।

किम्बहुना, व्यायामश्च नाम अमूल्यमौषधम्, किमपि अपूर्वं रसायनञ्च। महामनाः मालवीयमहोदयोऽपि

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

'...व्यायामेनाथ विद्यया...सम्मानार्हः सदा भव' पौनः-पुन्येन एवमुपदिशन् छात्रान् व्यायामार्थम् प्रैरयत् । सत्य-मेव शरीरे उत्साहस्य, चित्ते प्रसादस्य, प्राणेषु च जीवन-स्य संचारकारकः व्यायामः । सम्यगभ्यधायि केनापि—

व्यायामपुष्टगात्रस्य बुद्धिस्तेजो यशो बलम् ।
प्रवर्धन्ते मनुष्यस्य तस्माद् व्यायाममाचरेत् ॥

प्रश्नाः

१. कालिदासेन किम् अंगीकृतम् ?
२. स्वस्थं शरीरं किं किं कर्तुं प्रभवति ?
३. कीदृशं कर्म व्यायाम इति कथ्यते ?
४. विदुषां कः समुदाहारः अस्ति ?
५. अस्मद्देशीयाः युवानः किम् अभ्यस्यन्ति ?
६. कस्य प्रभावेण जनाः कष्टमयं जीवनं न यापयन्ति ?
७. केषाम् जनानाम् कदा च शारीरिकी स्थितिः विपद्यते ?
८. व्यायामः कतिविधः ? के च ते ?
९. पौरस्त्य-व्यायामानां के लाभाः ?
१०. को हि व्यायामः युष्मभ्यम् अति रोचते कथं च ?
११. जनैः किं स्मरद्भिः व्यायामः सेवनोयः ?
१२. महामनाः किम् उपदिशन् छात्रान् प्रैरयत् ?
१३. व्यायाम-विषये अन्तिम-पद्ये किमुक्तम् ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

# विनोबाचार्यस्य भूदानम्

अतिविचित्रेऽस्मिन् परमपवित्रे महनीयचरित्रे अनेकमहर्षिचरणसञ्चरणपूते भारतवर्षे अनेके महात्मानः अतीतकाले प्रादुर्भूताः, अद्यापि प्रादुर्भवन्ति च। अधुनैव राष्ट्रपिता महात्मा गान्धी एकस्मिन्नेव जन्मनि यं यं कृत्यकलापं सम्पादितवान्, तदन्ये महापुरुषाः जन्मशतेष्वपि कर्तुं न पारयन्ति। वस्तुतः ईदृशाः मानवाः परमवदान्याः अलोक-



सामान्याः भवन्ति। ते स्वजन्मना मातापितरौ, स्वकुलं, स्वदेशं, निखिलां पृथ्वीं च पावयन्ति। ते एव तीर्थानि सत्तीर्थीकुर्वन्ति, कर्माणि च सुकर्मीकुर्वन्ति। तेषामाविर्भावं दृष्ट्वा पितरो मोदन्ते, देवाः सोल्लासं नृत्यन्ति, सनाथा चेयं वसुन्धरा भवति। तानेवोद्दिश्य श्रीमद्भगवद्गीतायां लिखितमिदं भगवद्वचः सार्थकं भवति—

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

यद् यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा।
तत् तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्॥

विनोबाचार्योऽपि राष्ट्रजनकः गान्धी इव विशिष्ट-सत्त्वसम्पन्नः भारतीयानां जनानां कल्याणपरम्परासु दत्त-मनोयोगधनः सन् स्वजीवनं सफलयति। राष्ट्रपितुः प्रेयान् शिष्यः अनन्यभक्तश्चायमाचार्यः तदवशिष्टकार्यक-लापं पूर्णतां नयति।

विनोबाचार्यः स्वतन्त्रेऽस्माकं राष्ट्रे 'भूदान' आन्दो-लनस्य जनकः। सर्वे भूमिस्वामिनः स्वभूमिक्षेत्रस्य षष्ठांशं, ततोऽपि अल्पीयांसमंशं वा अकिञ्चनेभ्यो लोकेभ्यो ददतु इति तस्यादेशः। अतीते वर्षपञ्चके स सहस्राधिकसंख्य-कानां निर्धनानां जनानां भृशमुपाकरोदित्यत्र न कोऽपि संशयलेशः।

अनेनैव प्रकारेण धनवन्तोऽपि स्वस्य स्वस्य मासिकस्य आयस्य कञ्चिदंशमवश्यमेव निर्धनसात् कुर्वन्तु इति समुल्लसति तस्य उपदेशलक्ष्मीः।

विनोबाचार्यस्य मते भूदान-वृत्तिः वस्तुतः अहिंसा-सनाथा मानसी क्रान्तिः। सा चेयं क्रान्तिः शान्ति-भूषिता निखिलमेव भारतराष्ट्रं लौकिकसमृद्धिमण्डितं विधास्यति।

अस्माकं देशः राजनीतिकीं स्वतन्त्रतां लब्धवान्।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

साम्प्रतम् आर्थिकं स्वातन्त्र्यम् अस्माकं प्रथमं लक्ष्यम्, सामाजिकं स्वातन्त्र्यं द्वितीयं लक्ष्यं, नैतिकं स्वातन्त्र्यं च तृतीयं लक्ष्यम्। सेयमनुक्रमं लक्ष्यसोपानपरम्परा वर्तते। विनोबाचार्यः साम्प्रतम् प्रथमलक्ष्यसिद्धये अहर्निशं प्रयतते।

आचार्यस्य मतानुयायिनः सम्प्रति श्रीजयप्रकाशनारायणसदृशाः स्वतन्त्रभारतस्य भव्योदात्ताः लोकनायकाः सन्ति। अस्माकं सर्वेषामेव भारतीयानां त्रिविधोऽपि लक्ष्यलाभः अस्मिन् भू-दानमहासत्रे समपेक्षितः।

एकदा स्वव्याख्यानावसरे इदं भावशिरोरत्नम् आचार्यः क्लेशराशिनिमग्नाय धनसंघर्षपीडिताय विश्वजनीनाय लोकाय समर्पितवान्—

'धर्मस्य लोकोत्तरं महत्त्वमहं भृशमवगच्छामि। बहुवर्षेभ्यः धर्मं व्यवहारसरणिं नयामि च। परन्तु अस्मिन् 'भूदान' आन्दोलने अहं क्षणे क्षणे धर्मस्य किमपि नवं नवं तत्त्वमनुभवामि हृष्यामि च। चिरपुराणमपि चिरनवीनमिदं धर्मतत्त्वम् अर्थकाममोक्षरूपम् सार्वजनीनं त्रिविधं मंगलं साधयिष्यति' इति।

वयमपि विनोबाचार्यस्य पुण्यचरित्रकथामन्दाकिन्यामवगाहनेन पवित्राः कतिनश्च सञ्जाताः—

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

'रचनात्मकमिदं कार्यं सर्वथा सफलं भवेत् ।
भारतश्चापि धन्यं स्यादित्यस्माकं मनोरथः ॥'

**प्रश्नाः**

१. कीदृशाः मानवाः अलोकसामान्याः भवन्ति ?
२. भगवद्गीतायां किमुक्तम् ?
३. विनोबाचार्यः कस्य प्रेयान् शिष्योऽस्ति ?
४. सः कस्य आन्दोलनस्य जनकः ? तस्य च कः आदेशः ?
५. इयं क्रान्तिः भारतराष्ट्रं किं विधास्यति ?
६. भूदानान्दोलनेन कस्य लक्ष्यस्य सिद्धिः भविता ?
७. आचार्यः लोकाय किम् धर्मतत्त्वम् उपादिशत् ?
८. आन्दोलनेऽस्मिन् कानि तत्त्वानि निहितानि सन्ति ?
९. लेखकस्य कः मनोरथोऽस्ति ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

# विकासवादः

डार्विनप्रभृति पाश्चात्या विद्वांसो विकासवादमाददते । 'सर्वेषामपि प्राणिनामप्राणिनां वा क्रमेणोन्नतिः' इति तेषां मतम् । तेन खलु वर्षशतात्पूर्वं आसीद्यादृशं जगत्, तदपेक्षयाद्य वर्तते बहुतरमुन्नतम् । अद्य च यादृशम्, तदपेक्षयेदं भाविनि समयान्तरे भविष्यत्युन्नतमेव । सेयं क्रमिकोन्नतिधारा इति फलति ।

किन्तु भारतीयाः तद्विपरीतवादिन इव इति प्रसिद्धिः । अस्त्ययं संस्कारोऽस्मिन् देशे यज्जडचेतनोभयात्मकमपीदं जगत् यथाभवद्वर्षशतात्पूर्वं, तदपेक्षया अद्य अवनतम् । न वृक्षास्तादृशाः, न वा तथा प्रसवित्री शस्यानां विश्व-रा । न वान्नादिष्वेव तादृशी शक्तिः । का तु कथा ष्याणाम्, ते खलु नक्तंदिवमायुषा वीर्येण धर्मेण द्ध्या समृद्ध्या वा ह्रसन्त्येव । सोऽयं भारतीयानां ह्रासवादः ।

फलमपि किलानुभूयते स्ववादानुकूलमेव । ते खलु प्रत्यहमुन्नमन्त्येव, भारतीयास्तु प्रत्यहं वा प्रतिक्षणमव-नतिमेवाश्लिष्यन्ति ।

अस्तु, विकासवादोऽयमस्मच्छास्त्रेष्वपि सुस्फुटमुप-लभ्यते । क्रमिकोन्नतिवादापरपर्यायोऽयं विकासवादः

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

प्राणिविषये संक्षेपतः खलु द्वेधा विभज्य द्रष्टव्यः—जगति प्राणिनामुत्पत्तिविषये, मनुष्याणां सामाजिक-



व्यवस्था विषये च। पूर्वत्र तावदेष विकासवादसिद्धान्तः—

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

न खलु भूम्यां परिदृश्यमाना इमे सर्वेऽपि प्राणिनो युगपदेवोदपद्यन्त, अपि तु क्रमेणैषामुत्पत्तिः। सा चापि उत्तरोत्तरमुन्नतैव। तथा च पूर्वं तिरश्चां, तत्रापि प्रथमम् एकेन्द्रियाणां, ततो द्वीन्द्रियाणाम्, अनन्तरं त्रिचतुरेन्द्रियाणां पञ्चेन्द्रियाणां च तदनुक्रमेण समनस्कानां मनुष्याणां उत्पत्तिः इति तत्सिद्धान्तः फलति। 'वानरा एव पुच्छघर्षणेन मनुष्यतया परिणता' इति डार्विनमतमप्येतत्सिद्धान्तमनुसृत्यैव प्रवृत्तमस्ति।

सोऽयं सिद्धान्तः कथंचित् भारतीयं सृष्टिक्रममनुसरतीव। तथा हि—सर्वेष्वपि पुराणेषु नवविधसृष्टिप्रतिपादनावसरे पूर्वं वृक्षाणां, तदनु तिरश्चां, ततो देवानां, ततश्च मनुष्याणां सृष्टिरभिहिता। यथा—विष्णु पुराणे ( १ अंशस्य ५ अध्याये )

'सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा।
अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः॥ ४॥
तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः॥ ५॥
पञ्चधावस्थितः सर्गो ध्यायतोऽप्रतिबोधवान्।
बहिरन्तोऽप्रकाशश्च संवृतात्मा नगात्मकः॥ ६॥

---

१. बहिः शब्दादिषु, अन्तः सुखादिषु च प्रकृष्टज्ञानरहितः।

२. वृक्षरूपः।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

मुख्या नगा यतः प्रोक्ता मुख्यसर्गस्ततस्त्वयम् ।
तं दृष्ट्वाऽसाधकं[1] सर्गममन्यदपरं पुनः ॥ ७ ॥
तस्याभिध्यायतः सर्गस्तिर्यक् स्रोतोऽभ्यवर्तत ।
यस्मात्तिर्यक्प्रवृत्तिः स तिर्यक्स्रोतास्ततः स्मृतः ॥ ८ ॥
पश्वादयस्ते विख्यातास्तमःप्राया ह्यवेदिनः ।
उत्पथग्राहिणश्चैव तेऽज्ञाने ज्ञानमानिनः ॥ ९ ॥
अहंकृता अहंमाना अष्टाविंशद्वधात्मकाः[2] ।
अन्तःप्रकाशास्ते सर्वे आवृताश्च परस्परम् ॥ १० ॥
तमप्यसाधकं मत्वा ध्यायतोऽन्यस्ततोऽभवत् ।
ऊर्ध्वस्रोतास्तृतीयस्तु सात्त्विकोर्ध्वमवर्तत ॥ ११ ॥
ते सुखप्रीतिबहुला[3] बहिरन्तश्च नावृताः[4] ।
प्रकाशा बहिरन्तश्च ऊर्ध्वस्रोतोद्भवाः स्मृताः ॥ १२ ॥
तुष्टात्मानस्तृतीयस्तु देवसर्गस्तु स स्मृतः ।
तस्मिन्सर्गेऽभवत्प्रीतिर्निष्पन्ने ब्रह्मणस्तदा ॥ १३ ॥
ततोऽन्यं स तदा दध्यौ साधकं सर्गमुत्तमम् ।
असाधकांस्तु[5] तान् ज्ञात्वा मुख्यसर्गादिसंभवान् ॥ १४ ॥

---

१. संसाराप्रवर्तकम् ।

२. ज्ञान-तुष्टि-विपर्ययात्मका एते वधा सांख्यदर्शने स्पष्टाः ।

३. सुखदुःखाद्यनुभववन्तः ।

४. पितृपुत्रादिसम्बन्धज्ञानशून्याः ।

५. केवलं भोगप्रसक्ता इति कर्मणामनारम्भेण संसारस्याप्रवर्तका देवा अपि ।



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

तथाभिध्यायतस्तस्य सत्याभिध्यायिनस्ततः ।
प्रादुर्बभूव चाव्यक्तादर्वाक्स्रोतास्तु साधकः ॥ १५ ॥
यस्मादर्वाग्व्यवर्तन्त ततोऽर्वाक्स्रोतसस्तु ते ।
ते च प्रकाशबहुलास्तमोद्रिक्ता रजोऽधिकाः ॥ १६ ॥
तस्मात्ते दुःखबहुला भूयो भूयश्च कारिणः ।
प्रकाशा बहिरन्तश्च मनुष्या साधकास्तु ते ॥ १७ ॥

तदत्र सृष्टिक्रमे संक्षेपतो विकासवादसिद्धान्त एव प्रख्यापितः । इयांस्तु विशेषः, नहि भारतीयानामयं विकासवादोऽन्येषां यूरोपादीनां विकासवाद इव निरीश्वरवादः । क्रमिके विकासेऽप्यत्र तत्तच्छक्त्याविर्भावस्य कारणसामग्र्याः संनिधापयिता कश्चिदीश्वरपदवाच्योऽभ्युपगम्यते एव । किं वा सन्निधापयिता, ईश्वर एव तत्तच्छक्त्यावेशेन भिन्नभिन्नैः स्वरूपैरवभासते इति । 'इन्द्रो मायाभिः पुरुरूप ईयते', 'एकं सद्विप्रा बहुधा वदन्ति' इत्यादि पदे पदे समुद्घोषयताम् आर्याणां स्फुटोऽभिमानः । तत एवात्र ईश्वरस्यैव क्रमेण सर्वविधप्राणिजनकत्वमाख्यातम् ।

केचित्तु मत्स्य-कूर्म-वराह-नृसिंह-वामन-परशुराम-राम-कृष्ण-बुद्ध-कल्कि-इति दशावतारक्रमेणापि पूर्वं जलचरा जीवाः, ततो जलस्थलोभयचराः, ततोऽरण्यचराः, ततोऽ-

---

१. कर्मस्वधिकृताः संसारप्रवर्तकाः ।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

र्धग्राम्याः, ततो लघवः पुरुषाः, ततः केवलबलशालिनः, ततश्च राज्यादिप्रबन्धकुशलाः बलवन्तः, ततश्च राजनीतौ ज्ञाने बले च सर्वत्र मानुष्यस्य पूर्णतामुपगताः, ततोऽनन्तरं विरक्ताः, ततश्च समाजोद्धारकाः पुरुषा उत्पद्यन्ते इत्येवं विकासवादं स्फोरयन्ति, न तु तच्छास्त्रे क्वचिदेवं परिष्कृतमित्युपेक्षितम् ।

विकासवादस्य द्वितीयः सिद्धान्तः यत्—न मनुष्यजातिः उत्पत्तिदशायामेव सर्वशक्तिविशिष्टा सर्वकार्यकुशला वा अभूत्, उत्पन्नमात्रेयमासीत्पशुप्राया । पशव इवादिमाः मनुष्या अपि वन्यैः फलादिभिराहारं वर्तयन्ति स्म, अरण्ये वृक्षाणामधो गिरिगुहादिषु च वसतिमाश्रयन्ति स्म । पूर्वमिमेऽभवन्ननग्नाः, तदुत्तरं वल्कलधारकाः । विद्यायाः सभ्यतायाः वा नासीत् कथापि ।

अथ क्रमेण उन्नतमस्या जातेर्ज्ञानम् । कृषिपद्धतिः, गृहग्रामनगरादिनिर्माणम्, वस्त्रादिविरचनम्, शस्त्रादिधारणं च क्रमेणैव बुद्धौ मनुष्याणामुपारूढम् । सर्वाऽपि विद्या क्रमेणैव विकासमलभत, लभते, लप्स्यते च । तेनाद्यावधि अनाविष्कृता अपि बह्वयः कलाः काले प्रादुर्भवेयुरेव । अद्यपर्यन्तमननुशीलिता अपि बह्वयः शक्तयः क्रमेणानुशीलनं प्राप्नुयुः । अननुशीलितास्तु काश्चन शक्तयो

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

विनाशमप्युपगच्छन्ति, तेन संभाव्यते कस्मिंश्चिद्विषयेऽवनतिरपि।

सोऽयं सिद्धान्तः कस्मिंश्चिदंशे प्रकारभेदेन पुराणेष्वपि स्फुटं निबद्धः।

तथाहि—मार्कण्डेयपुराणे सृष्टिप्रकरणे (४५-४६ अध्याययोः) नवविधभूतसर्गादिविवरणानन्तरं मानुषसर्गविस्तरे प्रकृते ब्रह्मणो ब्राह्मणादीनां बहुविधानां मनुष्याणामुत्पत्तिमभिधाय तदनन्तरं स्त्रीष्वार्तवप्रवृत्त्या स्त्रीपुंससंयोगादायुषोऽन्ते सन्तानप्रवृत्तिरित्युपवर्ण्य तस्मिन् काले प्रजानां का स्थितिरित्युपनिबद्धम्।

वायुप्रोक्ते ब्रह्माण्डपुराणे द्वितीयेऽनुषङ्गपादे सप्तमाध्याये चाप्येतत्प्रायेणैवमेवोक्तम्। वायुपुराणे चादितोऽष्टमेऽध्याये इत्थमेव सर्वमभिहितम्। अग्रे वायवीयेऽष्टपञ्चाशेऽध्यायेऽपि विस्तरेण युगाख्यानमित्थंप्रायमेव।

एतेनेदं स्पष्टं जातम् यत् सिद्धान्तस्यास्य श्रेयः नाश्लिष्यति विकासवादप्रवर्त्तकं डार्विनमहोदयम्, उत यूरोपदेशम् अपि तु मन्त्रद्रष्टॄन्, युगस्रष्टॄन्, त्रैलोक्यस्य त्रिकालीनरहस्यानामुद्भावयितॄन् अस्मत्पूर्वजान् मुनिगणानेव। तेषां सिंहनादः केन वा नाश्रावि यत्—

'यदिहास्ति तदन्यत्र, यन्नेहास्ति न तत् क्वचित्'

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

## प्रश्नाः

१. डार्विनप्रभृतीनां किम् मतम् अस्ति ? किं च तेन फलति ?

२. भारतीयानां ह्रासवादस्य कः अभिप्रायः ?

३. विकासवादः कियद्विधः अत्र अभिहितः ?

४. डार्विनस्य मतं किमनुसृत्य प्रवृत्तमस्ति ?

५. विष्णुपुराणीयः कः सृष्टिक्रमः अस्ति ?

६. डार्विनाद्यपेक्षया भारतीयविकासवादे किं वैशिष्ट्यमस्ति ?

७. विकासवादीयः द्वितीयः सिद्धान्तः कीदृशः ? वर्णयत ।

८. मार्कण्डेयपुराणे सृष्टिप्रकरणे किमुक्तमस्ति ?

९. सिद्धान्तस्यास्य श्रेयः कम् आश्लिष्यति ?

१०. अस्मत्पूर्वजानां कः सिंहनादः अस्ति ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

# भारतमातुः अमृतपुत्रः सुभाषः

अस्माकमयं देशः बहुकालं पारतन्त्र्यदुःखमनुभूय भगवदनुग्रहेणाद्य स्वातन्त्र्यमुपभुङ्क्ते। परं तत्स्वातन्त्र्यं तिलक-गान्धि-सुभाष-नेहरूप्रभृतीनां महतां नेतॄणां तपसः, भारतस्वातंत्र्यसंग्रामस्य वीरसैनिकानां सर्वस्वबलिदानस्य च फलमिति ते सर्वेऽप्यस्माकं पूजाभाजनम्। श्रीसुभाषस्तु विलक्षणं रहस्यमयं मार्गमवलम्ब्य भारतमातुः परतंत्रता-पाशं छेत्तुम् आमृत्योः प्रायतत। तस्य प्रेरणामयं चरितं सदैव युवकानां हृदयानि सदुत्साहपूर्णानि देशभक्ति-परिप्लावितानि च कर्तुं प्रभविष्यति।



एष महान् नेता श्रीसुभाषचन्द्रः सप्तनवत्युत्तरेऽष्टादश-शततमे ईशवीये वर्षे जनवरीमासस्य त्रयोविंशतितमे दिवसे (२३-१-१८९७) वङ्गप्रान्ते जन्म लेभे।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

अस्मिन्नेव प्रदेशे रामकृष्णपरमहंस-रवीन्द्रनाथठाकुर-जगदीशचन्द्रवसुप्रभृतयो महापुरुषाः आविर्भूय स्वमाहात्म्येन अस्माकं देशस्य ख्यातिं दिशि दिशि प्रसारयामासुः। श्रीसुभाषस्य प्रारंभिकी शिक्षा कटकनगरस्यैकस्मिन् आंग्लविद्यालये बभूव। तत्रैवायं आंग्लजातीयानां सहपाठिनां दुर्व्यवहारेण खिन्नः 'आंग्लदेशीयाः अस्माकं शासकाः, वयं च तैः शासिताः' इति अनुभवति स्म। प्रवेशिकापरीक्षामुत्तीर्यायं कलिकातानगरस्य प्रेसीडेन्सीविद्यालये प्राविशत्। तत्रैव श्रीसुरेशचन्द्रबैनर्जीप्रभृतीनां महापुरुषाणां सत्सङ्गेन प्रभावितः श्रीसुभाषः ब्रह्मचर्यव्रतं गृहीत्वा आत्मानं देशसेवायै समर्पितवान्। अस्य हृदये हिमालयं गत्वा तपश्चिकीर्षाऽपि समजनि। अतोऽयं योग्यं गुरुमन्वेष्टुं व्रजभूमौ बभ्राम। तत्र तथाविधं गुरुमसम्प्राप्य स्वगृहं प्रतिनिवृत्तः। ततश्च बी० ए० परीक्षामुत्तीर्य आई० सी० एस्० परीक्षामुत्तरितुम् इङ्गलैंडदेशं जगाम। तत्र परीक्षायां सफलीभूय यदा स्वदेशं न्यवर्त्तत तदात्र देशे महात्मगान्धिना असहयोगान्दोलनं प्रवर्तितमासीत्। श्रीसुभाषस्य हृदयेऽपि राष्ट्रसेवायाः भावना प्रज्वलिता। देशबन्धोः श्रीचित्तरंजनदासस्य आदेशान् अनुसरंश्चायं मातृभूमिसेवायां संलग्नो बभूव। यदा महात्मा गान्धी सत्याग्रहान्दोलनं प्रारभत, तदा श्रीसुभाषः राष्ट्रियसेवकदलस्याधिपत्ये नियुक्तः स्वां संघटनप्रतिभां प्राकाशयत्। यदा श्रीदेश-

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

वन्धुना धारासभाप्रवेशपक्षपातिनी स्वराज्यपार्टी स्थापिता, तदा श्रीसुभाषोऽस्याः प्रचारं 'फारवर्ड' इति नाम्ना आंग्ल-पत्रेण करोति स्म। देशे ब्रिटिशशासकैर्दमनचक्रे प्रवर्त्तिते श्रीसुभाषोऽपि स्वदेशान्निर्वासितः ब्रह्मदेशे 'माण्डले'नाम्नः स्थानस्य कारागारे स्थापितश्च। किन्तु तत्र स रोगाक्रान्तो जातः, अतोऽधिकारिभिरमुच्यत। इदानीं स देशसेवायै रचनात्मकं कार्यक्रममारब्धवान्। खादी-प्रचारः, छात्र-समितीनां संघटनम्, राष्ट्रियविद्यालयानां स्थापनञ्चेत्यादीनि तस्य सेवाकार्याणि बभूवुः। महानुभावोऽयं भारतवर्षस्य लक्ष्यं पूर्णस्वराज्यमेव मन्यते स्म। यदा तु राष्ट्रियमहा-सभा ( कांग्रेसापरनाम्नी ) स्वकीये कलिकाताधिवेशने औपनिवेशिकस्वराज्यमेवास्य देशस्य लक्ष्यं निरधारयत्, तदा श्रीसुभाषः 'लिबर्टी'नाम्ना पत्रेणास्य अनौचित्यं प्रत्यपादयत्। परमग्रिमे वर्षे एव राष्ट्रियमहासभा लवपुरा-धिवेशने पूर्णस्वराज्यमेव भारतवर्षस्य लक्ष्यमघोषयत्। तदानीं श्रीसुभाषः 'देशेऽत्र ब्रिटिश-सत्तायाः प्रतिद्वन्द्विनी राष्ट्रियशासनसत्तापि स्थापनीया' इति स्वमतं प्राचारयत्। परं यदा महात्मा गान्धी विचारमिमं नानुमोदितवान्, तदा स राष्ट्रियमहासभायाः कार्यसमितिं तत्याज।

त्रिंशदुत्तरे ऊनविंशतिशततमे ईशवीयाब्दे जनवरीमा-सस्य षष्ठविंशतितमे दिवसे ( २६ जनवरी १९३० ) सर्वत्र

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

स्वतन्त्रतादिवसस्य प्रथमः समारोहः आसीत् । समयेऽस्मिन् वीरसुभाषः अधिकारिभिः कारागारे निक्षिप्तः । परं तत्रैव कारागारे स राष्ट्रध्वजं समारोपयत्, येन अधिकारिभिः स भृशं पीडितः । एवं भूयसीभिः यन्त्रणाभिः अस्य स्वास्थ्यं नितान्तं विगलितम् । स्वास्थ्यलाभहेतोरयं यूरोपीयदेशान् जगाम । तत्रायं मुसोलिनी-डीवेलेरा-रोम्या-रोलाँप्रभृतीनां महापुरुषाणां सान्निध्यमाप । महानुभावोऽयं राष्ट्रियसभायाः अध्यक्षपदमपि द्विवारं समलंचकार । 'फारवर्ड ब्लाक'नाम्नी अग्रगामिदलस्य संस्थाऽपि स्थापितानेन । स कलिकातानगरीस्थं होलवार-स्मारकमपसारयितुमपि आन्दोलनमारब्धवान् । अतोऽधिकारिभिः पुनरपि स कारागृहे स्थापितः । तत्र च प्रायोपवेशनेन प्राणान् त्यक्तुं दृढनिश्चयमकरोत् । एतद्विज्ञाय पुनरपि सोऽधिकारिभिः कारागृहाद् व्यमुच्यत ।

एवं मातृभूमिं सेवमानः तन्निमित्तं चानेकान् क्लेशान् सहमानः श्रीसुभाषः भारतमातुः परतन्त्रतायाः बन्धनं छेत्तुं दिने दिने अधिकतरां व्याकुलतामनुभवति स्म । द्वितीयस्य महायुद्धस्य विभीषिका अखिलान् लोकान् आतङ्कितान् अकरोत् । अस्मिन्नेवान्तरे वीरसुभाषेण भारतमातुर्मुक्तये अद्भुता योजना निरमायि ।

एकदा रात्रौ स शाक्यमुनिरिव स्वभवनं परित्यज्य,

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

स्वपरिवारं शोकविधुरं विहाय, स्वदेशमाकुलीकृत्य ऐन्द्रजालिक इव कुत्रापि विलुप्तः। तमुदन्तं श्रुत्वा सर्वे जनाः स्तब्धा इव, मूका इव, तडित्ताडिता इव अभूवन्। न किञ्चिदपि वक्तुं प्राभवंश्च। श्रीसुभाषस्तु महामहिमशालिनीं भारताधिरूढाम् अखिलां ब्रिटिशसत्तां प्रतार्य गान्धारदेशं प्राप, तत्र च कियन्तमपि कालमुषित्वा जर्मनी-देशं जगाम। तत्रत्यो हिटलरो महतो वीरस्यास्य सभाजनं चकार। ततः श्रीसुभाषः जापानदेशं प्राप्य भारतीयानां संघटनं चकार। पूर्वद्वीपेषु स्थितैः सर्वैरपि भारतीयैर्वीरसुभाष एव 'नेता' अमन्यत। अत एव स तत्र 'नेताजी' इति नाम्ना प्रसिद्धिमाजगाम।

अथ नेता सुभाषचन्द्रः 'आजाद हिन्द फौज'नाम्नीं सेनां 'आजाद हिन्द सरकार' इति नाम्नीं सत्तां च तत्रैव पूर्वद्वीपेषु स्थापयामास। नेता सुभाषचन्द्रः शस्त्रबलेन भारतदेशं स्वतन्त्रं कर्तुमियेष। असंख्याता भारतीयाः सम्प्रदायं जातिं वर्णं चानपेक्ष्य तस्य सेनायां प्रविष्टा अभूवन्। सैषा आजाद-हिन्द-सेना ब्रह्मदेशस्य सीमामतिक्रम्य इम्फालप्रदेशे आजाद-हिन्द-ध्वजमारोपयत्। समतिक्रान्ते कस्मिंश्चित् काले दैवदुर्विपाकात् आजाद-हिन्द-सेनायाः बहवः सैनिकाः हताः, अन्ये च बन्दीकृताः। तदानीं नेता सुभाषो वायुयानेन 'टोकियो'

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

नगरं प्रस्थितः। ततश्च 'वायुयान-ध्वंसेन अध्वन्येव स यशःशेषतामगात्' इति किंवदन्ती प्रसृता।

'नेताजी श्रीसुभाषचन्द्र बोस' महोदयेनारोपितो वृक्षोऽद्य फलितो दृश्यते। भारतमातुः बन्धनानि छिन्नानि। सर्वे भारतीयाः स्वतन्त्राः संजाताः। अस्मिन् स्वातन्त्र्य-यज्ञे वीरसुभाषः आत्मानं जुहाव। दिष्ट्या तदाहुतिः फलिता। इदानीं दिवि मोदते श्रीसुभाषः। परं यावत् वसुन्धरायाः स्थितिस्तावत् तस्य वीरस्य स्मृतिरपि मानव-हृदयेषु स्थायिनी भविष्यति।

**प्रश्नाः**

१. महान्तो नेतारः कथमस्माकं पूजाभाजनम् ?
२. सुभाषस्य चरितं किं कर्तुं प्रभविष्यति ?
३. सुभाषः कदा, कुत्र च जन्म लेभे ?
४. 'कटक'नगरस्य विद्यालये पठन् सुभाषः किं अनुभवति स्म ?
५. कस्यादेशात् कदा च अयं मातृभूमिसेवायां संलग्नो बभूव ?
६. 'फारवर्ड'पत्रेण सुभाषः किं प्राचारयत् ?
७. 'माण्डले'तः निवृत्य कानि सेवाकार्याणि सः कृतवान् ?
८. 'लिबर्टी'पत्रेण अयं किं प्रत्यपादयत् ?
९. कदायं राष्ट्रियमहासभायाः कार्यसमितिं तत्याज ?
१०. कदा कथञ्च योरोपीयमहापुरुषाणाम् अयं सान्निध्यमवाप ?
११. का संस्थानेन स्थापिता ?
१२. भारतमुक्तये कदा का च योजनानेन निर्मिता ?
१३. कदा कुत्र च सः 'नेताजी'नाम्ना प्रसिद्धिमवाप ?
१४. कां सेनां सत्तां च अयं स्थापितवान् ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

# साम्प्रदायिकता

चिरकालादेव हि भारतवर्षं साम्प्रदायिकासहिष्णुताया जन्मभूमिरिव प्रतीयते। आर्यधर्मावलम्बिष्वपि पुनरतितरामुपलभ्यमाना सा कदर्थयति देशहितैषिणां चेतांसि। 'वयमास्तिका यूयं नास्तिकाः', 'वयं वैदिकाः यूयमवैदिकाः', 'अस्माकं सम्प्रदायः प्राचीनतमो युष्माकं पुनर्नवीनः, किञ्चित्कालादेव प्रचलित' इत्येवं परस्परमधिक्षिपन्तः साम्प्रदायिकाः केन न श्रुता भवेयुः। तत्तत्संप्रदायनामोल्लेखपूर्वकं तत्तत्सिद्धान्तखण्डनप्रवृत्तानां ग्रन्थानां नामसु 'मुखभङ्गः', 'कर्णमर्दनम्', 'मुखचपेटिका', इत्यादिपदविन्यासोऽपि तादृश्या एव असहिष्णुतायाः लज्जास्पदं निदर्शनम्।

वर्तमाने काले समुन्नतदेशेषु तत्तदनुसारसाम्प्रदायिकभावनासु प्रतिदिनमुपक्षीयमाणास्वपि, अस्मासु भारतीयेष्वेव राष्ट्रियभावनाभ्रंशकरः असहिष्णुतायाः सद्भावः कस्य नाम देशहितैषिणः आर्याभिमानिनः मनस्तापं न तनुते।

तस्याः एतस्याः असहिष्णुतायाः किं कारणं कश्च तत्प्रतीकार इत्येतदेवात्र विचारविषयः।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

तदत्र आपाततः परस्परविरुद्धत्वेन प्रतीयमानेष्वपि शैव-शाक्त-वैष्णव-जैन-बौद्धप्रभृतिषु नानासंप्रदायेषु एकसूत्ररूपेण व्याप्तायाः भारतीयमौलिकसंस्कृत्याः स्वरूपस्यापरिज्ञानमेव तस्याः मुख्यं कारणमिति संक्षेपेण वक्तुं शक्यते। तथाहि—सामाजिकाचारेष्वपेक्षितेऽपि प्रायेण व्यक्तीनां साम्ये, विचारविषये सर्वेषां स्वातन्त्र्यं चिरादेवाभिमतमासीद् भारतीयानाम्। परस्परं विचारसहिष्णुतामन्तरेण न तत्प्रथते इति साप्यावश्यकत्वेनाङ्गमस्मत्संस्कृतेः। अत एव ईश्वरानीश्वरवाद-वेदपौरुषेयत्वापौरुषेयत्ववाद-वाममार्गदक्षिणमार्गादिभेदानां परस्परं सहिष्णुतया संस्थितिर्न कस्याप्यविदिता भारते। अत एव च विशुद्धभारतीयेतिहासे विदेशेतिहासेष्विव धर्मभेदासहिष्णुतामूलकस्य रक्तपातस्य नामापि न श्रूयते।

नृशंसन( मनुष्य-हिंसा )-विरोध-प्रतिपादकस्य महाभारतादिप्राचीनग्रन्थेषु श्लाघनीयगुणत्वेनासकृद्वर्णितस्य आनृशंस्यस्याप्यन्ततो मनुष्यत्वस्य समादररूपायां परस्परं विचारसहिष्णुतायामेव पर्यवसानं भवति।

व्यक्तिस्वातन्त्र्यरूपा वा मनुष्यत्वस्य सम्मानरूपा वा एषा विचारसहिष्णुतैव वस्तुतो जैनानामनेकान्तवादसिद्धान्तस्य मूलम्। विभिन्नशास्त्रेषु जैनाद्यागमेषु चोपसंगीतगौरवाया अहिंसाया अपि अन्ततस्तत्तच्चेतन-

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

व्यक्तीनां स्वव्यक्तित्वविकासार्थमबाधस्वातन्त्र्यमेव अभिप्रायो निष्पद्यते ।

अत एव भारतीयेतिहासे बलात्कारेण धर्मान्तरग्रहणस्य वार्ता अश्रुतचरी एव ।

अत्र विषये इदमवधेयम्—इतिहासविदामतिरोहितमेतत् यत् कालक्रमेण तत्तदवस्थानामावश्यकतानुरूपं स्वभावत एव नूतनाः नूतनाः सम्प्रदायाः सर्वेषु देशेषु प्रवर्तन्ते । परम्परागतमर्यादायाः विरोधित्वभावना तेषु किञ्चित्कालपर्यन्तमेव जनताया जायते । किञ्चित्कालातिपाते तु तेषां तस्यामेव मर्यादायामन्तर्भावः समावेशश्च प्रायः सर्वत्र क्रियते । ततश्च साम्प्रदायिकी असहिष्णुता सर्वथा अविचारमूला । अत एव तत्त्वविदो विचारशीलाः विद्वांसः तेषु तेषु सम्प्रदायेषु व्यापिन्याः एकस्या भारतीयसंस्कृत्या भावनयैव भावितचित्ताः उदारहृदयाः परस्परं सहिष्णुताभावस्यैवाभिवृद्धिमभिवाञ्छन्ति ।

अपरं च सम्प्रदायेषु परस्परं भेदः प्रायेण तस्य तस्य तत्त्वस्य विषये सांप्रदायिकपरिभाषाकृत एव भवति । एवं चान्ततः स भेदो भाषाया विलास एव पर्यवस्यति । यतो हि आध्यात्मिकानां दार्शनिकानां च तत्त्वानां परिशीलने भाषा प्रायेण परिभाषास्वरूपेणैव कार्यकरी

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

भवति । यथा हि तत्तच्छास्त्रेषु व्यवहारसौकर्यार्थं पारिभाषिकशब्दानां कल्पना संकेतो वा क्रियते । तथैव खल्वाध्यात्मिके दार्शनिके च जगति शाब्दिकरूढीनामाश्रयेण तत्तत्प्रमेयाणां प्रतिपादनं क्रियते । एवं भाषा तत्त्वस्य स्वरूपे कमपि भेदमनादधती केवलं तस्य विभिन्नपक्षानेव प्रतिपादयति । अतश्च 'शब्दब्रह्मातिवर्त्तते' इत्यनुसारं भाषायाः स्तरम् (लोकं पदवीं वा) अतिक्रान्तस्य तत्त्वदर्शिनः स्थितप्रज्ञस्य दृष्टौ—वेदान्तस्य 'ब्रह्म', नीति( कर्तव्य )शास्त्रस्य 'सत्यम्', बौद्धदर्शनस्य 'धर्मः' ( धम्मो ), मीमांसादर्शनस्य 'कर्म', तन्त्रशास्त्रस्य 'शक्तिः', गीताशास्त्रस्य च 'अहम्'—सर्वे एते पारिभाषिकाः शब्दाः वस्तुतः एकस्यैव मौलिकतत्त्वस्य तत्तद्दृष्टिभेदेन प्रतिपादकाः । मनुष्येण रचिता हि भाषा विचाराणां प्रकटीकरणार्थम् अपूर्णकमेकं साधनम्, स्वतःसिद्धस्य मौलिकतत्त्वस्य प्रतिपादिकैव भवितुमर्हति, न तूत्पादिका ।

सर्वमेतत्पश्यतां वै मनीषिणाम् सांप्रदायिकी असहिष्णुता केवलं मूर्खतायाः अज्ञानस्यैव च विजृम्भितम् । ततश्च राष्ट्रस्यैक्यम् एकस्याः भारतीयसंस्कृतेश्च भावनायाः पुष्टिमभिवाञ्छद्भिः सांप्रदायिकी असहिष्णुता समूलमुन्मूलनीया ।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

## प्रश्नाः

१. का देशहितैषिणां चेतांसि कदर्थयति ?
२. साम्प्रदायिकाः परस्परं किम् अधिक्षिपन्ति ?
३. साम्प्रदायिकग्रन्थानां नामसु विचित्रपद-विन्यासः किं निदर्शयति ?
४. असहिष्णुतायाः सद्भावः किं तनुते ?
५. असहिष्णुतायाः किं मुख्यं कारणम्, कथं च ?
६. अत्र विषये किम् अवधेयम् भवति ?
७. विचारशीलाः कथं किं च अभिवाञ्छन्ति ?
८. तत्तच्छास्त्राणां पारिभाषिकशब्दाः किं प्रतिपादयन्ति ?
९. साम्प्रदायिकता कस्य विजृम्भितमस्ति ?
१०. राष्ट्रस्यैक्यमभिवाञ्छद्भिः किं विधेयम् ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

## महायुद्धस्य विभीषिका

अतीते चत्वारिंशद्वर्षे विश्वव्यापकौ महायुद्धौ लोकै-रवलोकितौ, भूयश्च तृतीयाय तादृशाय महायुद्धाय क्रियमाणान् महतः सम्भारान् आलोकयाम, इत्यवसरो यत्स्मारयेयम् आत्मानं परिणामम् युद्धजन्यम्। लोकव्यसननिरपेक्षाः स्वार्थमात्रव्यपेक्षाः नेतृत्वाभिकामा ऐश्वर्ययुद्धाः मोहान्धाः केचन यदा 'युद्धं वीरवृत्तम्' इति प्रशंसन्ति, यूनश्च विविधं प्ररोचयन्ति स्वदेशगौरवगोपनाय एतद् इति, स्वप्रकर्षसम्प्राप्त्युपकरणमेतत् इति, तदा महान्तमपायमस्य लोकस्य कुर्वन्ति। युद्धे तावत् जयः क्वाचित्केन, पराभवः न्यग्भावश्च वाहुलकेन, दारुणानुबन्धाश्च नैयत्येन इति कः सुधीः युद्धं कामयेत। नहि आयोधनानि प्रवृत्तानि नैरपेक्ष्येण क्रौर्येण कात्स्न्येंन च निषूदयन्ति चेतनाचेतनार्थान्। इमानि खलु नयं च, सम्प्रदायं च, विद्याश्च, कलाश्च, संस्कृतिं च, सभ्यतां चापि समं समुत्सादयन्ति।

इदं च दारुणतरं भवति युद्धे यत् अनायुधीया नागरिकश्रेणयोऽपि गर्हिततमां कदर्थनां लभन्ते। सैन्याः समरशिरसि वर्तमानाः दुर्गस्थाः परिखास्था वा प्रायेण साधीयःसंविहितान्नाच्छादनाः सम्भवत्सौख्योपकरणसमन्विता भवन्ति। ते हि प्रधानं भवन्ति उपसर्जनं चान्ये



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

कोटिशो जनास्तेषाम् अन्नाच्छादनयोः साधीयस्यै प्रक्लृप्त्यै, सुखसामग्र्याश्च पर्याप्त्यै सन्ततं क्लेशपूगान् सहन्ते। न केवलं दैनिकोपयोगिविषयान् भोक्तुं न लभन्तेऽत्यन्तापेक्षितैरर्थैरपि च पर्याप्तं कुचिह्नणः संजायन्ते।

प्रथमे महासंग्रामे बहुत्र देशेष्वन्नाद्यस्य दारुणाऽपर्याप्तिरन्वभावि लोकेन, द्वितीयेनापि विकटतरं तद्वैकल्यमाकलितं, येनाद्यापि सर्वत्र सीदति जनौघः। अभूतपूर्वा कापि महार्घता पदार्थानाम् शरीरयात्रार्थानाम् आपादि। दधिपयसी मधुसर्पिषी गोधूम-चणकं व्रीहियवं नवनीतं शर्करा सिता च वासः ऊर्णं च—सर्वमिदं सप्तगुणेन अष्टगुणेन वार्घेण विक्रीयते। प्रकृष्टाश्चार्थाः निकृष्टैरर्थान्तरैर्व्यतिकीर्यन्ते, व्यतिकीर्णा अपि च कथंचिल्लभ्यन्ते।

नैतदेव। महान् हि द्रव्यविनियोगो भवति युद्धेषु। सर्वो राष्ट्रिय आयो युद्धोपकरणेषु उपयुज्यते, सञ्चितो द्रव्यराशिरपि निःशिष्यते। व्यतिरिक्तश्च करो न्यस्यते, बाढं च लोको व्यथते।

न चैतदेव। गतः स सम्प्रति साङ्ग्रामिकः पुरातनो न्यायः, येन स्त्रीबालवृद्धानामुपपीडयितारो निहन्तारो वा भीलुका इति वा आततायिन इति वा जगर्हिरे। सायुधा निरायुधेषु, रथिनो वाऽरथेषु पादचारेषु न प्रजह्रिरे। रणाजिरेष्वेव योधाः प्रतियोधैर्युयुधिरे, पौराञ्जान-

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

पदांश्च न ववाधिरे। अर्वाचीनेषु पुनः समरेषु व्योमयान-गतैराग्नेया विस्फोटका अस्त्रविशेषाः दाहका मारकाश्च गोलकाः प्रक्षिप्यन्ते प्रजास्वनेनःसु। नाङ्गना रक्ष्यन्ते न चार्भकाः, न जरठा अपेक्ष्यन्ते न च तरुणाः। सहस्रशः, लक्षशः, कोटिशश्च क्षणादेव प्रलीयन्ते। गृहाश्च धनधान्य-समृद्धाः समुत्साद्यन्ते। शस्यशालिन्यः शाद्वलाः क्षेत्रभक्तयश्च समुज्झासिताः सत्यः अरण्यान्यः सम्पद्यन्ते। अतीते महा-युद्धद्वये निर्मितेष्वपि कृष्णायसच्छन्नेषु गृहेषु सहस्रशो लोकाः शरणमलभमाना नाभसैरग्निविस्फोटकैरभिवृष्टा उत्क्रान्त-जीविता अभूवन्। इटलीदेशस्य अविसीनियेत्यस्य च मिथः संगरे इटलीवास्तव्यैः सैनिकैः अघोधोपहतेषु अविसीनिया-जानपदेषु व्योम्नोऽग्निवर्षेण शतशः स्त्रियः मुग्धाश्च शिशवो निसूदिताः। स्पेनदेशेऽपि गैहिकेन कलहेन भूताविष्टैरिव समानजानपदैः वध्यावध्यविवेकविश्रान्तैर्बालाश्च स्त्रियश्च वृद्धाश्च निबर्हिताः। कल्याणाचाराः विविधविद्यासमार-म्भिणो विद्वांसोऽपि न रक्षिताः। चीन-मिश्र-देशयोरुपरि जापान-फ्रान्सेङ्गलैण्डदेशजैर्यथा आचर्यत तदप्यलं लोमहर्ष-णाय कठिनस्यापि च चेतसः सद्योद्रवाय। अधुनातनेषु युद्धेषु न केवलं विस्फोटकानि आग्नेयास्त्राणि गगनादवपा-त्यन्ते विसर्पिविस्फुलिङ्गानि दाहकान्यपि। येन महाननर्थो घटितो भवति। क्वचित्तु विमानस्थैर्गरलमिश्रा मारुता अपि

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

जनाधिवासेषु प्रेर्यन्ते। भूमिष्ठाः प्राणपरित्राणस्याप्रभवन्तोऽगतिका लोकास्तदानीं कां दशां गच्छन्ति, कथं च करुणं क्रन्दन्तः यतस्ततो विह्वलन्ति, कथं वाऽर्धदग्धा अनुत्क्रान्तजीविता अङ्गभङ्गमनुप्राप्ता विकलेन्द्रियाः आयुःशेषं क्षपयन्तीति न दुष्करमुन्नेतुम्। न केवलं गगनविहारिभिर्विमानैरेवायमुपद्रवः साध्यते, सागरेषु 'पनडुब्बी' प्रभृतिभिरपि। किञ्च विश्वविध्वंसकेन परमाणुशक्तिकेनाग्नेयास्त्रविशेषेण अमेरिकास्थैः जापानदेशस्य यो विध्वंसः कृतः, कस्तं विस्मर्तुमीशः ? 'हिरोशिमा'-'नागासाकी'त्यादि प्रख्यातं नगरं तथा कार्त्स्न्येनोज्जासितमभूद्यथा नात्र पुरा कदाचिदधिष्ठानं (नगरं) किमप्यासीदिति जायते प्रतीतिः। समतलापि भूरुत्खातिनी समजनि, निरुदका च सोदका, पुलिनवती च स्रोतस्वती। निर्दग्धानि राजसदनानि। संहृतानि हर्म्याणि। कषितानि कुटीराणि। भस्मावशेषतां च गतानि तरुलतानिकुञ्जानि। सहस्रशो वपुष्मन्तः प्रतिभानवन्तः कलावन्तस्तत्पत्तनस्थाः निमेषेण यमपुरीं प्रविष्टाः, का कथा मृगशकुनिसरीसृपादीनाम्। गगने स्वैरविहारीणि पत्ररथकुलानि वासाय प्रतिष्ठमानानि अन्तराऽध्वानमेव अग्निच्छटातापेन सन्तप्तानि विचेष्टमानानि सद्यः कालधाम गतानि। किं बहुना, भूकम्पेन आप्लावेन वा न तथा हानिर्जीवलोकस्य कदाचिदजनि यथाऽनेनास्त्रजातेन नूतनेन संस्कारातिशयविस्मितैरमेरिकास्थैः प्रयुक्तेन।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

नैतावता युद्धविभीषिका पूर्णतो वर्णिता भवितुमर्हति। किं नु वर्ण्येत सुकुमारहृदयानां मृदितानां, मनोरथानां च भग्नानाम् । किं वोच्येत सीमन्तिन्यास्तस्याः याऽनुदिनं पापमाशङ्कमाना पत्युः कुशलोदन्तमुदीक्षते चिन्ताकृशा । किं नूदाह्रियेत वत्सलाया अम्बाया यस्या एककः सुतः क्वचिद्रणचत्वरे गतचेतनो विस्मृतनिमेषाभ्यां चक्षुर्भ्यां गगने बद्धलक्ष्य इव विपर्यस्त आस्ते। नात्रैव विश्राम्यत्यनर्थः। चिन्त्यतां तावद् गतिरनेकशोऽनूढानां कन्यकानां सैन्यदूषितानाम्। का नु खलु समवस्था संख्यातिगानां संगरसंभूतानां अज्ञातपितृकाणां विकृताङ्गानां दुर्जातानां शिशुकानाम् । किं नैतैः कलुषीकृताः पातिताश्च उत्तरे पुरुषाः । यदा युयुत्सवः शंखान्धमन्ति ध्वजांश्चोच्छ्राययन्ति तदा किं ते विचिन्तयन्ति 'युद्धानुरक्तिः किम्फला भविष्यति' इति। यत्सत्यं ये युद्धं युद्धम् इति असकृदुदाहरन्ति, स्वयं तत्र सज्जन्ति, परांश्च सज्जयन्ति तेऽत्यधिकानुतापेन युज्यन्ते ।

ये नामानीकिनीषु समवेता युद्धेषु व्याप्रियन्ते ते मनुष्यतया प्रायेण हीयन्ते, ते हि वन्यसत्त्वतामापद्यन्ते । युद्धस्यैष प्रभावः यत् यदप्यपकृष्टं मलीमसं च मनुष्यतायां भवति तदाविर्भवति। परा हि सीमा पशुसधर्मताया नृशंसतायाः क्षुद्रतायाश्चाभिव्यक्ता भवति ।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

पुरापि खलु प्रतिभयानि समुत्सादकानि बभूवुर्युद्धानि। अन्यत्र रामरावणयोः कुरुपाण्डवानां च संगरात् महान् हि प्रमाथोऽभूत्पौरजानपदानामाजिषु व्यतीतासु। तदात्वे दुर्गे गृहीते पत्तने वा विजिते तत्रत्यो लोकः समूलम् अकृष्यत। अलक्षेन्द्रेण तैमूरेण चङ्गेजेन यत्कदनं सर्वाङ्गीणं प्रजानामिहत्यानामनुष्ठितं तदद्यापि प्रस्फुटं स्मरति लोकः। यूरोपभूखण्डे च हूणैर्यद्रुद्रताण्डवमभिनीतं तत्कः कवीश्वरः क्रान्तदर्शनोऽपि परिणतप्रज्ञोऽपि प्रभविष्णुर्यथातथं वर्णयितुम्। परमतीतेन महायुद्धद्वयेन दारुणतया अतिक्रान्ताः पूर्वे समेऽपि समराः।

किञ्चेदमपि न प्रस्मरति लोको भारतवर्षस्थः यत् सुल्तानमहमूदेन चरितं सप्तदशकृत्वो देशमिमं प्रति अभियानेन। न केवलं सहस्राणि स्त्री-पुरुषाः विशंसिताः, देवालयाश्च समुत्सादिताः, अर्चाश्चावमानिताः देवविग्रहा शकलीकृताश्च, नगरविशेषाश्च लुण्ठिताः समुज्ज्ञासिताः। शतशः सहस्रशश्च कुलोद्गताः पुरुषाः कुलाङ्गनाश्चापि बलाद्दासीकृत्य गजनीं प्रापिताः, मौहम्मदं मतं च हठाद् ग्राहिताः। यदा च नादिरशाहो देहलीमाचस्कन्द तदा तस्य सैन्यहतका यं कमपि जनं हस्तेन आगृह्णन्, वीतदयास्तं झटित्यसिनाऽघ्नन् नगरीं च दिनकतिपयानि अनारतम् अदाहयन्। मुगलसम्राजां पठानाधीश्वराणां च अनेकानि अभियानानि

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

यां विनष्टिं संत्रासकरीमकुर्वन् तां चिन्तयतो लोकस्याद्यापि हृष्यन्ति रोमाणि। दिष्ट्या भारतेऽभूदशोको नाम महामनाः सार्वभौमः। जितारातिरप्ययं कलिङ्गसंगरे स्वैरनीकैः कृतेन समुत्सादेन तथोद्वेजितोऽभूद्यथा युद्धं पापकमिति कृतमतिराजीवनं तदहासीत्, 'अहिंसा परमो धर्मः' इति च पर्यग्रहीत्।

ये खलु अद्याप्यसंतृप्ताः स्वयं युयुत्सन्ते, परांश्च विभ्रमसमुत्पाद्य युद्धाय प्रचोदयन्ते, तेऽहिताः लोकाय प्रलयमिव तस्य चिकीर्षन्ते। उन्मत्ता दृप्ताश्चेमे वितथां स्वश्लाघापरां वाचमुदीरयन्तः प्रतारयन्ति लोकान्। उक्तमपि—

'ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः।
सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः॥' इति।

रणाङ्गणे क्वचिच्छवाः शेरतेऽनवेक्षिताः पूतिभावमापन्नाः, क्वचिद्विफलितमूर्धानः रुधिरालीढाः निःसहं विपर्यस्ता उपेक्ष्यन्ते। क्वचिन्मुण्डानि, क्वचिद्रुण्डानि गृध्रैः शृगालैश्च लुच्यमानमांसानि दृश्यन्ते। क्वचिन्निर्मांसाः कङ्कालाः, क्वचिदवचूर्णिताः कर्परा विलोक्यन्ते। अति हि बीभत्सं दर्शनं युद्धभूमेः। लेखन्यपि वेपते समुद्विग्नेव वर्णनपरा। जिह्वापि संत्रस्तेव जोषमास्ते। स्तिम्यतीव हृदयं वेदनाविवशं, मन्दायते च दृष्टिर्व्यसनासहेति महामारीक्रिया इव युद्धहत्या द्रष्टुमपि न याति किमुत वक्तुम्।

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

## प्रश्नाः

१. कोऽयमवसरः युद्धजन्यपरिणामश्रावणाय ?

२. प्रयुक्तानि आयोधनानि किं किं समुत्सादयन्ति ?

३. युद्धे नागरिकाः कथं कृच्छ्रिणः संजायन्ते ?

४. प्रथममहायुद्धे किं किम् अन्वभूवन् जनाः ?

५. आधुनिकेषु युद्धेषु किं किं प्रयुज्यते, कथं कथं च विनाश्यते ?

६. 'इटली'सैनिकैः के, कुत्र च निषूदिताः ?

७. 'हिरोशिमा'नगरे किम् अभूत् ? तस्य च कानि फलानि लक्ष्यन्ते ?

८. यदा युयुत्सवः शंखान् धमन्ति तदा किं न विचिन्तयन्ति ?

९. कदा नृशंसतायाः परा सीमा अभिव्यक्ता भवति ?

१०. के प्रसिद्धाः समराः अत्र अभूवन् ?

११. कः सम्राट् युद्धमहासीत् अहिंसां च पर्यग्रहीत् ?

१२. लोकस्य निर्ऋतिः का ?

१३. रणाङ्गणे किं किं विलोक्यते ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

# व्यापारः

एकस्य स्थानस्य देशस्य वा वस्तु स्थानान्तरे देशान्तरे चोपयोगार्थं क्रीत्वा नीयते यत्स व्यापारः। एवमेव स्वयमुत्पादितस्य क्रीतस्य वा वस्तुनः परकीयं धनमादाय विक्रयोऽपि व्यापारः। तत्र प्रथमः क्रेतुर्व्यापारोऽपरश्चोत्पाद्य क्रीत्वा वा विक्रेतुः। देशस्य स्थितेर्भेदात् किञ्चिद्वस्तु कुत्रचिदावश्यकताया अधिकमुत्पद्यते किञ्चिदत्यपेक्षितमप्यत्यल्पम्। यथास्माकमेव देशे पञ्चनदप्रान्ते गोधूमस्याधिक्यम्, वङ्गप्रान्ते च तण्डुलस्य। एवं पञ्चनदप्रान्ते तण्डुलानां न्यूनता, वङ्गप्रान्ते च गोधूमस्य। परमावश्यकता उभयत्रापि द्वयोरपि वस्तुनोर्भवत्येव। तेन वङ्गप्रान्तः पञ्चनदप्रान्तात् गोधूममानयति, पञ्चनदप्रान्तश्च वङ्गप्रान्ततस्तण्डुलान्।

एकतः स्थानादानयनम्—'आयातम्' निर्गमञ्च 'निर्यातम्' कथयन्ति व्यवहारविदः। एवञ्च द्वयम्—आयातं निर्यातञ्चेदं मिलित्वा 'व्यापार' इति समभिधीयते। सम्प्रति कस्यापि देशस्य कार्यं व्यापारं विना चलत्येव नहि। यथा जीवनोपयोगिसर्वविधसामग्रीसम्पन्नमपि भारतं क्रीडाविलाससामग्रीणां कृते देशान्तरस्य व्यापारं वर्द्धयति। यदि रूसदेशे तैलमधिकमुत्पाद्यते, कार्पासं च नास्ति तदा तेन तैलं दत्त्वा कुतोऽपि देशात् कार्पासमासादनीयमेव। व्यापारः स्वेन प्रचारेण, कस्यापि देशस्यांशे प्रकृत्याऽनुप-

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

हृतमपि वस्तु समर्पयति येन तस्यावश्यकता पूर्यते।

व्यापारान्नानाप्रकारको लाभो भवति। कस्यापि देशस्य सम्पत्तिर्भौतिकी समुन्नतिश्चैकान्ततो व्यापारमेवाधारीकुरुते। 'व्यापारे वसते लक्ष्मीः' इयं प्राचीना सूक्तिर्यमर्थमभिधत्ते नासावंशतोऽपि सन्देहस्य पदम्। यदि वयं समृद्धेषु शक्तिशालिषु च 'अमरीका' 'ब्रिटेन' प्रभृतिदेशेषु दृष्टिं प्रक्षिपाम, तदा स्फुटमिदं प्रत्येतुमवसरं लभेमहि यत् सर्वापि समृद्धिः शक्तिश्चैषां व्यापारेणैव जनिता। ब्रिटिशजातीयाः पुरा व्यापारस्य कृते एव भारतं समायाताः। तस्मिन् काले तेषां व्यापारोऽपि लघुरेवासीत्। परं क्रमशः व्यापारमुन्नमयन्तस्ते तन्महिम्नैव नष्टशासनसूत्रस्य देशस्यास्य शासकाः समजायन्त। व्यापारेणैव 'अमरीका' देशो धनिकानां देशानां मूर्धन्यः समवर्त्तत। प्राचीनतमयुगे भारतमपि परदेशेषु व्यापारं प्रसार्य धनिकत्वमासादितवत्।

न केवलं समृद्धिरेव एधते व्यापारेण, परं सभ्यतायाः अपि विकासे व्यापारेण साहाय्यमाचर्यते। यस्य देशस्य येन देशान्तरेण व्यापार-सम्पर्को भवति तयोः परस्परं प्रवृत्तेन यातायातेन विचारस्य व्यवहारस्य च आदानप्रदानयोर्जातयोः सभ्यता समेधते।

व्यापारेण 'वृत्तिराहित्यं' दूरीक्रियते। यस्य देशस्य व्यापारः समृद्धः स स्वीयं वस्तु प्रचुरया मात्रया परदेशेषु प्रेषयितुमिच्छति। प्रचुरवस्तुनिर्माणार्थं प्रचुरस्य जन-

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

समूहस्य नियुक्तिरपेक्ष्यते। येन व्यर्थजीवनानामपि जनानां समयः सार्थकतां भजते। अन्येषु क्षेत्रेषु इव अत्र क्षेत्रे वृत्ति-साङ्कर्यं वृत्तिकार्कश्यं वा न भवति। यथा यथा व्यापारपरा वर्द्धन्ते, देशः समृद्ध्यति, व्यापारान्तराणि च प्रसूयन्ते।

व्यापाराल्लाभाः भूयांसो दर्शिताः, परं हानिरपि भवति। ततः व्यापारेण धनवृद्धौ जातायां देशस्य विलासिता अतिभूमिम् ऋच्छति। यथा यथा भौतिकी वृद्धिर्भवति तथा तथा आध्यात्मिकी शक्तिः अपचीयते। परं विधातुर्हि सृष्टिरेव मधुर-कटुविमिश्रा। अतो दोषाः सन्तीति कृत्वा व्यापारो न त्याज्यतामर्हति। न हि गावः सन्तीति यवा नोप्यन्ते। अल्पदोषो बहुगुणः पदार्थः सदा सदादर-पात्रमेव भवति। अतः सर्वैः राष्ट्रैः आत्मोन्नतये व्यापारः समेधनीयः। तेन विनोन्नतेरसम्भवात्।

### प्रश्नाः

१. व्यापारशब्दस्य कः अभिप्रायः ?

२. व्यवहारविदः आयात-निर्यातशब्देन किम् अवगच्छन्ति ?

३. व्यापारः कीदृशं वस्तु समर्पयति ?

४. 'व्यापारे वसते लक्ष्मीः' इति सूक्तिः कमर्थमभिधत्ते ?

५. अमेरिकादिदेशानां समृद्धिमालोक्य किमवगम्यते ?

६. अमेरिकादेशः कथं देशानां मूर्धन्यः जातः ?

७. व्यापारस्य के के लाभाः ?

८. आत्मोन्नतये राष्ट्रैः किं करणीयम् ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

## ग्राम्यजीवनं नागरजीवनञ्च

इह लोकेऽर्थवन्त्यपि वस्तूनि अन्योऽन्यम् अतिशेरतेऽर्थवत्तया। नहि समेऽर्थाः समप्रयोजनाः समोपकाराः वा। न वा सर्वत्र सर्वे गुणा दृश्यन्ते। व्यतिरेको हि लक्ष्यते।

कल्याणी तावत् ग्रामे वसतिः। ग्रामो हीश्वरकृतः नगरं च मानवकृतमित्यभियुक्ताः। ग्रामेषु यथा सुदर्शं सर्गसौन्दर्यं न तथा नगरेषु। पूर्वत्र हि स्रष्टुरियं सृष्टिरव्यवहिताऽभिमुखेऽभ्याशे वा वर्त्तते द्रष्टुः। उत्तरत्र त्वन्तरिता गगनोल्लेखिशिखराभिर्हर्म्यमालाभिस्तिरस्कृता च शिल्पिशालाधूमसंघातैर्न्यक्कृता च प्रतिरथ्यं प्रतिसंसरणं च चञ्चूर्यमाणाभिरुच्चैर्विज्ञापनार्थिभिः सतूर्याभिः शकटीभिर्नितरामेवान्तर्धीयतेऽक्ष्णोः श्रवणयोश्च। चेतनाचेतनोभयसृष्टेर्निभालनस्य तत्प्रतिशब्दाकर्णनस्य तन्निसर्गनिरीक्षणस्य तद्रामणीयकोपभोगस्य च ग्रामेष्वेवासरो न नगरेषु। पशुसंघैः संचरमाणाः शकुनिनिकुरम्बाणि चाभितो निरीक्षमाणा ग्रामीणास्तत्तत्स्वभावं परिचिन्वन्ति तत्तद्भुतानि च विजानन्ति। मेघनादानुलासिनो (मयूरस्य) लास्यं पश्यन्ति, केकाश्च शृण्वन्ति, कोकिलरवांश्च मनोहत्य निशाम्यन्ति। उपान्तवर्त्तिष्वरण्येषु च गोमहिष्यादि

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

चारयन्तः श्वापदैरपि संसृज्यमानास्तच्छीलान्यपि हेलया विजानन्ति । मन्दमारुतान्दोलितपल्लवाः विस्तारवतीः क्षेत्र-भक्तीः, शाद्वलान् गोचरान्, वनस्पतीन् वानस्पत्यांश्च, विविधानि नवानि शष्पाणि चालोकमालोकं तैस्तैरर्थैर्बन्धु-भावं सखिभावं वोपगतः प्रह्लादते मुग्धो जानपदो जनः । प्रशान्तायां प्रत्यूषवेलायां क्षितिजमाक्रममाणस्य स्वेनारुणिम्ना हरितान्यप्यवश्यायप्रसिक्तानि शष्पाण्युपरञ्जयतो बाला-र्कस्याभिनवोदितस्य वा कुमुदिनीनायकस्य संदर्शने मन्दसुरभिसमीरस्य वाञ्जलिभिः पाने ग्रामीणाः एवेशते न नागराः । नगरेषु तु सर्वं कृतकम् । नाकृतकं किञ्चि-दस्ति । कृतकः स्नेहः, कृतक आदरः, कृतकं दाक्षिण्यम्, कृतको वेषः, कृतकं सुखोपकरणम्, कृतकाः गृहाः, कृतकाः आरामाः, कृतिकाः खेलाः । यत्सत्यं कृतकं मानुष्यकमिति ।

ग्रामेष्वल्पा एव जनाः संवसन्ति, सान्तराश्च गृहाः भवन्ति । उच्छ्रिताश्च वितताश्च क्षेत्रभूमय इत्यमृतगर्भा बालार्कमयूखाः अन्तरगारमप्रतिहताः प्रविशन्ति समुद्भास-यन्ति चान्तरम् । कृषिव्यवसाया ग्रामीणाः प्रायेणेति भूम्ना प्रकाशेषु क्षेत्रेषु व्याप्रियन्ते । येऽपि खल्वन्तर्निकेते कृत्येषु प्रवर्तन्ते तक्षायस्कारादयः शिल्पिनस्तेऽपि प्रवातं यथेष्टमासेवन्ते । आरोग्यं च परमं लभन्ते । ग्रामीणाः हि महाकायाः परिपुष्टाङ्गाः दृढसन्धयो दीप्तिमद्वपुषो महाप्राणाः

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

भवन्ति प्रायेण । नागरास्तु अल्पतनवः, पेलवाङ्गाः, कृश-कायाः, विवर्णवदनाः सामयाश्च भवन्ति बहुशः । एषां च विशेषः शरीर एव न, चेतस्यपि लक्ष्यते । अहार्य-निश्चयतया प्रलोभनपराङ्मुखतया निर्भीकतया स्फुटवादितया प्रकृतिस्थतया चैते जानपदाः सुदूरमतिक्रामन्ति नागरि-कान् । परम्परीणमाचारमनुपालयन्तः विदेशजं वस्तुजात-मनभ्युपयन्तः परकीयं नेपथ्यं चाननुकुर्वन्तोऽविकृते स्वे रूपेऽवतिष्ठन्ते । नागरास्तु प्रायेण अल्पसत्त्वा इत्यधीरा अव्यवस्थितचेतसश्च, बह्वपेक्षा इति भीताश्चाटुकाराश्च, दक्षिणा इति मनसा विसंवादिनः धूर्त्ताश्च । एते हि सततं संस्कारपरायणाः यतस्ततश्चाहार्यगुणमपेक्षमाणाः स्वतामेव हारयन्ति । सुखसम्बद्धाः सलीलं सविभ्रमं च निर्वहन्तोऽ-नर्हाश्च भवन्ति द्वन्द्वसहिष्णुतायाः ।

परं नैतदस्ति नगरवासे गुणा एव न सन्तीति । कथं वा शक्यं भरतशपथो विस्मर्तुम्—'षण्मासान् ग्रामभाव-सेद्यस्यार्योनुमते गत' इति । सत्यं सार्षपं शाकं, पिच्छिलं दधि गुडं च सरसं यथेष्टमश्नाति ग्राम्यः । गाम्य इति च व्यपदिश्यते इत्यप्यवितथम् ।

प्रायशो नाभिविनीता विद्यासु कलासु वाऽमी ग्रामीणा विरलमेव भोगं लभन्ते कृच्छ्रेण च वर्तन्ते । नागरास्तु विविधविद्याभारभासुरा भूयसे निर्वेशाय कल्पन्ते सुखं च

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

निर्वहन्ते। पूर्वे लोकव्यवहारस्यानभिज्ञा इति बहुधा विप्रलभ्यन्ते, उत्तरे तु व्यवहारे परं कुशला नेतरैर्विडम्ब्यन्ते। साधूक्तं केनापि विदांवरेण—यदीच्छसि लोको मां जानीयान्न चाहं किमपि जानीयां तर्हि ग्राममावसेति। अथेच्छसि बुध्येय वस्तु सतत्त्वं लोकश्च मां मा स्म बुद्धेति तर्हि नगरमुपवसेति।

परिष्कारोऽपि नाम नात्यन्तं परिहरणीयः। एषणीयः स भवति वाचि वेषे च। यो हि वल्गुवाक् सुवेषश्च स कस्य मनो नावर्जयति कस्य वान्तरङ्गं नोत्तरङ्गयति परितोषेण। निसर्गसुन्दरमप्यनलंकृतं वपुः अप्रसाधिताः शिरोरुहाः न तथा हृदयहारिणो भवन्ति यथोपस्कृताः। परं ग्रामेष्वयं परिष्कारः सुदुर्लभः। यदि नाम स्यात्तर्हि ग्राम्यतामेव जह्युः।

अबोधोपहता ग्रामीणा निसर्गत एवान्धतमसे निलीना वस्त्वाभासांस्तुच्छान् वस्तुतया परिगृह्णन्ति, प्रवादानपि निर्निबन्धनान् प्रतियन्ति। पितृपैतामहान् मूढान् विश्वासान् अप्यपरीक्ष्यैव परिश्लिष्यन्ति। पङ्गव इव दण्डेन परेण प्रेक्षावता च नेया भवन्ति। तदिदं कस्य नामाऽभिमतं स्यात् ग्राम्यवृत्तं सुमेधसः।

अयमत्र निष्कर्षः—न हि स्वायम्भुवेऽस्मिन् सर्गे किमपि दोषलेशैरस्पृष्टं गुणैकनिकेतनं समस्ति। ग्रामेषु

CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

यदीष्टा विद्यावितरणसुविधा विधीयेत, शिल्पेषु च केषुचन ग्रामेष्वभिविनीयेत लोकस्तर्हि न किमपि हीयेत, सर्वं च संधीयेत। यदि वा ग्रामे ग्रामे वा विद्याशालानि पुस्तकागाराणि च प्रवर्त्येरंस्तदा ग्रामवासदोषा भूयसाऽपकृष्येरन्। या चास्य चिन्ताविनिर्मुक्तस्य सरलस्वभावस्य ऋजुदृष्टेरपुरोभागिनो ग्रामीणस्य दैनन्दिनी चर्या सा कस्य स्पृहां न जनयति। जायन्ते हि कवयो न च क्रियन्त इत्याभणन्ति। ग्रामेषु विविक्ताः प्रदेशाः, एकान्तस्मरणीयाः स्थलीविशेषाः, सरिताम् रहःप्रदेशाः च धियं प्रीणयन्ति, जायन्ते चोत्तमोत्तमाः कविबुद्धयः। ग्रामा हि कवयितॄणां जनिभुवः न नगराणीति सुस्थितः उत्कर्षप्रकर्षो ग्रामाणामिति।

**प्रश्नाः**

१. लोकेऽस्मिन् किं लक्ष्यते ?

२. अभियुक्ताः किं ब्रुवते ?

३. ग्रामेषु कस्य कस्य अवसरो विद्यते ?

४. केषु केषु दृश्योपभोगेषु ग्रामीणाः अतिशेरते ?

५. ग्रामीणनागरिकयोः शारीरिकस्थितौ को भेदः ?

६. नागरिकाः किमर्थं कल्पन्ते किं च निर्वहन्ते ?

७. अबोधोपहताः ग्राम्याः किं किं कुर्वन्ति ?

८. ग्रामेषु कः सुधारः अपेक्षितः अस्ति ?

९. उत्तमाः कविबुद्धयः कथं जायन्ते ?

१०. कवयितॄणां का जनिभूः ?



CC-0. Late Pt. Manmohan Shastri Collection Jammu. Digitized by eGangotri

